श्रीशेषचन्द्रिकाचार्यविरचितः

# पदार्थविवेकः

(लघुपदार्थविवेकसहितश्च)

सम्पादकः

विद्वान् के.वि.एन्. प्रसन्नाचार्यः

उपनिदेशकः, श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

प्रकाशनम्

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

कर्नाटकसंस्कृतविश्वविद्यालयेन मानितम्

श्रीव्यासराजमठः (सोसले), मैसूरु,

२०२०



श्रीशेषचन्द्रिकाचार्यवृन्दावनसन्निधानम्
तिरुमकूडलु

॥ श्रीमन्मूलगोपालकृष्णो विजयते ॥

श्रीव्यासतीर्थग्रन्थमाला -६

श्रीशेषचन्द्रिकाचार्यविरचितः

# पदार्थविवेकः

(लघुपदार्थविवेकसहितश्च)

सम्पादकः

विद्वान्. के.वि.एन्. प्रसन्नाचार्यः

उपनिदेशकः; व्यासतीर्थसंशोधनप्रतिष्ठानम्

प्रकाशनम्

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

कर्नाटकसंस्कृतविश्वविद्यालयेन मानितम्

श्रीव्यासराजमठः (सोसले)

मैसूरु,

२०२०.

**पदार्थविवेकः** -इदं ग्रन्थपुष्पं परमपूज्यव्यासराजमठाधीशैः श्रीश्रीविद्याश्रीशतीर्थश्रीपादैः ४८१तमे श्रीव्यासराजगुरसार्वभौमानाम् आराधनसुसन्दर्भे नववृन्दावनक्षेत्रे विलम्बिनामसंवत्सरस्य फाल्गुणकृष्णचतुर्थीतिथौ (१३.३.२०२०) श्रीव्यासराजगुर्वन्तर्गतमुख्यप्राणस्थश्रीकृष्णाय समर्पितम् ।

सम्पादकः – विद्वान् के.वि.एन्. प्रसन्नाचार्यः
मैसूरु

प्रकाशनम् – श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्
श्रीव्यासराजमठः (सोसले)
मैसूरु.

Publication Year 2020

प्रतयः – ५००

पुटसङ्ख्या – xx+268

Price _ Rs. 160 only

This book is published with the grant
from the Govt. of Karnataka

अक्षरसंयोजनम् – सुब्बण्ण केम्पदाळिहळ्ळि
9141311280

Printers: Vani Press
Geetha Road,
Chamarajapuram, Mysuru-570 005
Ph. 0821-4253295, 9886788295

॥ श्रीमन्मूलगोपालकृष्णो विजयते ॥

**जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानम्**

**श्रीराजेंद्रतीर्थपूर्वादिमठीयश्रीव्यासराजमठः, सोसले.**

दिनांक २०.०३.२०

## अनुग्रहसन्देशः

तर्कशास्त्राध्येतॄणां विद्यार्थिनां सुग्रहाय अन्नम्भट्टेन तर्कसङ्ग्रहः विरचितः। एवमेव तत्तद्दर्शनप्रमाणप्रमेयस्वरूपविविदिषूणां विद्यार्थिनामुपकाराय अर्थसङ्ग्रह-अद्वैतपरिभाषा-यतीन्द्रमतदीपिकादिप्रबन्धाः सर्वत्र प्रथिताः विद्योतन्ते। माध्वीं विचारपद्धतिम् अवगन्तुकामानां सुग्रहाय प्रमाणपद्धति- तत्वसङ्ख्यानप्रभृतयः उत्कृष्टाः ग्रन्थाः अध्ययनपरम्परायाम् अध्येष्यमाणाः विद्यन्त इति विदितमेव विदुषाम्। श्रीमदाचार्यपद्धतिं श्रीमट्टीकाकृत्पादविचारसरणिं च उपजीव्य अस्मत्पूर्वाचार्यैः पद-वाक्य-प्रमाणपारावारपारीणैः श्रीमद्रघुनाथतीर्थश्रीमच्चरणैः पदार्थविवेकाख्यः प्रकृष्टप्रबन्धः अनुगृहीतो विद्यते। अस्मिंश्च प्रबन्धे बालानां सुखबोधाय तार्किकग्रन्थपद्धतिमनुसृत्य द्रव्यगुणकर्मादिभेदेन अष्टौ पदार्थाः निरूपिताः।

द्रव्यविवेकाख्यप्रकरणे एकादशद्रव्यानि स्फुटमुपपादितानि। साक्षिसमर्थनम्, स्मृतिप्रामाण्यसमर्थनम्, सृष्टिप्रक्रियादिनिरूपणम्, तमसः द्रव्यत्वसमर्थनम्, समवायादिनिराकरणम् इत्यादि अत्र विहितं विदुषां विद्यार्थिनां च बहूपकारमित्यत्र न सन्देहगन्धः। अमी महानुभावाः पूर्वाश्रमे लघुपदार्थविवेकाख्यप्रबन्धं निर्माय अनन्तरं पदार्थविवेकाख्यं विस्तृतमेकं प्रबन्धं प्रणिन्युरिति तदीय ग्रन्थावलोकिनाम् अतिरोहितम्। लेशतः प्रकाशितस्यास्य प्रबन्धस्य समग्रः शुद्धश्च पाठः नोपलब्ध आसीत्। परन्तु, रजतपीठपुराधिष्ठितैः श्रीकृष्णचरणाराधनसमेधितविभवैः श्रीकृष्णापुरमठाधीशैः श्रीविद्या-

सागरतीर्थश्रीमच्चरणैः प्रदत्तया मातृकया ग्रन्थोऽयं पाठशोधनपुरस्सरं मुद्रापित इति सामोदमुल्लिखामः। मातृकप्रदानेन बहूपकृतवतां कृष्णापुरस्वामिनां व्यासतीर्थसंशोधनप्रतिष्ठानं कार्तज्ञमभिव्यनक्ति। ग्रन्थस्यास्य शोधकार्यं श्रद्धया विहितवते के.वि.एन्. प्रसन्नाचार्याय अस्मदाराध्यः श्रीकृष्णः शं तनोतु। लिप्यन्तकरण-मुद्रापनादिकर्मणि व्यापृतेभ्यः सर्वेभ्यः श्रीगोपालकृष्णः आयुरारोग्यसमभिवर्धनेन अनुगृह्णात्वित्याशास्महे।

इति नारायणस्मरणानि

**श्रीश्रीविद्याश्रीशतीर्थश्रीपादाः**

श्रीव्यासराजमठः, सोसले.

# निदेशकवचनम्

'सङ्क्षेपविस्तराभ्यां हि प्रवदन्ति मनीषिणः' इति प्राज्ञसूक्तिमनुसृत्य तत्तद्दर्शनप्रमाणप्रमेयस्वरूपपरिचायकाः बहवः ग्रन्थाः दर्शनपरम्परायां विद्योतन्ते। यथा अष्टाध्यायी - तर्कसङ्ग्रहः - अर्थसङ्ग्रहः - अद्वैतपरिभाषा - प्रमाणपद्धतिः इत्यादयः। सङ्क्षेपेण विदिततत्वाः प्रपञ्चं जिज्ञासवो भवन्ति। प्रकृते, श्रीमद्रघुनाथतीर्थमुनीश्वराः माध्वदर्शनप्रमाण-प्रमेयस्वरूपविज्ञानार्थं 'लघुपदार्थविवेक-पदार्थविवेक'नामकौ प्रबन्धप्रवरौ विरचितवन्तः। शिष्ट-तात्पर्यचन्द्रिका- तत्वसार- तत्वकणिका- ईशावास्यटिप्पण्यादिप्रणयनेन विद्वज्जनसमादरणीयाः अमी महानुभावाः पदार्थविवेकाख्यप्रबन्धनप्रणयनेन माध्वसिद्धान्तप्रमाणप्रमेयावगमार्थं महान्तमुपकारमकार्षुः। ग्रन्थोऽयं नैय्यायिकीं पद्धतिमवलम्ब्य पदार्थ-द्रव्य-गुण-कर्मादिस्वरूपं परिचाययति। विशेष-विशिष्ट-अंशिस्वरूपनिरूपणावसरे सिद्धान्तविचारधारागतं नावीन्यमपूर्वत्वं च ग्रन्थेऽस्मिन् प्रतिपादितम्। श्री के.वि.एन्. प्रसन्नाचार्यः मातृकात्रयसहाय्येन महत्या श्रद्धया ग्रन्थरत्नमिमं संशोध्य शास्त्रसेवां व्यधात्। अयं च विद्वत्तल्लजः अस्मत्साधुवादानर्हति। तुळुलिपिनिबद्धमातृकायाः लिप्यन्तरकरणे बहूपकृतवते विदुषे साणूरुकृष्णमूर्तिशर्मणे, गणीकीकृतवते केम्पधाळि सुब्बण्णमहोदयाय, मुद्रकाय श्रीनिवासमहोदयाय च मदीयं कार्तज्ञं प्रकाशयामि।

श्रीमद्विद्याश्रीशतीर्थश्रीमच्चरणाः शोधप्रतिष्ठानस्यास्य संस्थापकाः सम्पोषकाः मार्गदर्शकाश्च विद्यन्ते। तेषां करुणाबलादेव विद्वज्जनतोषकं सरस्वतीसमाराधनमत्र किञ्चिदेव प्रचलति। पूज्याः गुरुपादाः सर्वदा अनुग्राहका भूयासुरिति सम्प्रार्थये।

गौरवनिदेशकः

**डा॥ डि.पि. मधुसूदनाचार्यः**

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

## सम्पादकभणितिः

महदिदं प्रमोदस्थानं यन्मया यथाशक्तिसंशोध्य सम्पादितः इतःपूर्वमप्रकाशितः **पदार्थविवेकाख्यो** ग्रन्थः इदंप्रथमतया श्रीव्यासतीर्थसंशोधनप्रतिष्ठानद्वारा प्राकाश्यं नीयत इति ।

## ग्रन्थप्रणेतारः

अस्य ग्रन्थस्य रचयितारः परमपूज्याः प्रातःस्मरणीयाः श्रीरघुनाथतीर्थाः । एते महानुभावाः द्वैतसिद्धान्ते मुनित्रये अन्यतमत्वेन परिगणितानां श्रीव्यासतीर्थानां दिव्यपरम्परायां तेभ्योऽनन्तरं दशमा विराजमानाः आसन् । "दशमो मत्समो भवेत्" इति श्रीव्यासतीर्थानां वचनं सत्यापयन्तः श्रीव्यासतीर्थैः विरचितस्य तात्पर्यचन्द्रिकाग्रन्थस्यावशिष्टभागपूरणेन श्रीशेषचन्द्रिकाचार्याः इत्येव विख्याताः। पञ्चपञ्चाशद्वर्षपर्यन्तं पीठाधिष्ठितैरेतैर्महानुभावैः अनेके ग्रन्थाः रचिताः। तत्र तत्वप्रकाशिका व्याख्यानरूपा शिष्टतात्पर्यचन्द्रिका, बृहतीसहस्रस्य व्याख्यारूपः तत्वसारः, तन्त्रसारसङ्ग्रहस्य व्याख्या तत्वकणिका, एवं लघुपदार्थविवेकः पदार्थविवेकश्चेति तैर्निबद्धा ग्रन्थाः प्रथिताः। एतेषु पदार्थविवेक-लघुपदार्थविवेकौ स्वतन्त्रग्रन्थौ। अवशिष्टास्तु व्याख्यारूपाः। अपूर्वा गङ्गास्तुतिरप्येका तैः रचिता विद्यते ।

भाष्यदीपिकाचार्या इत्येव विख्याताः परमपूज्याः श्रीजगन्नाथतीर्थाः एषां विद्याशिष्याः आश्रमशिष्याश्च । ते तु एवमेतान् स्तुवन्ति –

**येनायं निरणायि मध्वगुरुसद्भाष्यप्रकाशाशयः**
**प्राखण्डि प्रतिवादिदर्शनगणः प्राबन्धि गुर्वर्णवः ।**

**शिष्येभ्यः समदायि वित्तमुभयं प्रालम्भि विद्यासनं**
**सोऽयं श्रीरघुनाथतीर्थगुरुराट् शुद्धिं विदध्यान्मतेः ॥**

इति। श्रीरघुनाथतीर्थानां पूर्वाश्रमनाम श्रीरामचन्द्राचार्याः। एते च शौनकगोत्रोद्भवाः। अयमप्यपूर्वो विषयः अनेन ग्रन्थेन ज्ञायते। ग्रन्थान्ते "शौनकाचार्यगोत्रेया रामचन्द्रविपश्चिता" इति लिखितम्। अनेन अयं ग्रन्थः पूर्वाश्रमे रचित इत्यपि ज्ञायते।

## पदार्थविवेकः

यथा न्यायशास्त्रं प्रविविक्षूणां विद्यार्थिनाम् अन्नम्भट्टेन रचितः तर्कसङ्ग्रहाख्यग्रन्थः न्यायसिद्धान्तस्य परिचायको भवति, यथा च लघुसिद्धान्तकौमुद्याख्यग्रन्थः व्याकरणशास्त्रस्य, अर्थसङ्ग्रहाख्यग्रन्थः मीमांसाशास्त्रस्य परिचायको भवति एवमेवायं पदार्थविवेकः द्वैतसिद्धान्तस्य परिचायको भवति। यद्यपि श्रीमदानन्दतीर्थभगवत्पादैरेव तत्वसङ्ख्यानतत्वविवेकादिग्रन्थेषु पदार्थानां निरूपणं कृतम्, अथापि एकत्र सङ्गृह्य अतिसरलतया प्रतिपादनात् द्वैतसिद्धान्ताध्येतॄणाम् अयं ग्रन्थः अत्युपकारको भवतीत्यत्र न कश्चित् सन्देहः।

पदार्थविवेकः इति नाम्नैव ग्रन्थेऽस्मिन् पदार्थानां निरूपणं क्रियत इति ज्ञायते। यद्यप्यत्र द्रव्य - गुण - कर्म - सामान्य- विशेष - विशिष्ट - अंशि-अभावभेदेन पदार्थाः विभक्ताः। एवं विभागे भगवतः प्राधान्यं न सेत्स्यतीति स्वतन्त्रमस्वतन्त्रं च इत्यादिनाऽचार्यैः पदार्थाः अन्यथा विभक्ताः। तथाच अयं ग्रन्थः गङ्गावालुकपरिगणनवत् अपार्थकः स्यादिति चेत्, स्वयमेवोद्घोषितं "तथाप्यस्य प्रकरणस्य पदार्थविवेचनमात्रार्थत्वादयमपि विभागो नाऽयुक्तः। तर्ह्यत्र भगवत्प्राधान्यं न ज्ञायत इति चेत्, न ह्यत्राचार्यवचनं तिरोहितमस्ति। द्रव्येषु आत्मत्वरूपनिरूपणावसरे तार्किकैः आत्म-परमात्मस्वरूपमन्यथै-

वोपवर्णितम्। अस्माभिस्तु वैदिकमर्यादामवलम्ब्य यथावत्स्वरूपमुपवर्णितमिति पदार्थानां मध्ये प्राप्तस्यापि परमात्मनः निजं रूपं प्रकाशितमिति प्रकरणस्य वैशिष्ट्यं विज्ञेयम्।

ग्रन्थेऽस्मिन् – (१) द्रव्यविवेकः (२) गुणविवेकः (३) कर्मविवेकः (४) सामान्यविवेकः (५) विशेषविवेकः (६) विशिष्टविवेकः (७) अंशिविवेकः (८) अभावविवेकः – इति प्रधानतयाऽष्टविभागाः सन्ति। अवान्तरविभागास्तु नैके सन्ति।

प्रथमं पदार्थसामान्यलक्षणम् उद्देशलक्षणपरीक्षादिक्रमेण निरूपितम्। तन्निरूपणावसरे स्वसिद्धान्तरीत्या सादृश्यघटितसर्वलक्ष्यनुगतलक्षणलक्षणमपि सुष्ठु प्रतिपादितम्। अनन्तरं द्रव्य-गुण-कर्मत्वादिना पदार्था अष्टधा विभक्ताः।

द्रव्यविवेके महत्तत्वरूपद्रव्यमारभ्य आत्मपर्यन्तमेकादशविधानि द्रव्याणि निरूपितानि। मध्ये साक्षिसमर्थनं, स्मृतिप्रामाण्यसमर्थनं, सुवर्णस्य पार्थिवत्वसमर्थनं, स्वसिद्धान्तरीत्या सृष्टिप्रक्रिया, समवायनिराकरणम्, तमसः द्रव्यत्वसमर्थनम् इत्यादयः नैके विषयाः सुष्ठु प्रतिपादिताः।

गुणविवेके शब्द-स्पर्श-रूप-रस-गन्धादयः अनेके गुणाः निरूपिताः। बुद्धिनिरूपणसन्दर्भे प्रमाणपद्धति-तर्कताण्डवादिग्रन्थेषु प्रमाणानि यथा निरूपितानि तत्क्रमानुसारेणैव सङ्क्षेपेणात्र सप्रमाणं प्रतिपादितम्।

कर्मविवेके तार्किकोक्तरीत्यैव पञ्चविधकर्माणि निरूपितानि।

सामान्यविवेके सामान्यं नाम व्यावर्तको धर्मः। न तु पराभ्युपगतनित्यमेकमनेकानुगतस्वरूपमित्यादयो विषया निरूपिताः।

विशेषविवेके भेदरहितवस्तुविषयकानुपचरितभेदव्यवहारनिमित्तत्वं विशेषस्य लक्षणम् । भेदहीनेऽपि अपर्यायशब्दानां सहप्रयोगादिभेदकार्यनिर्वाहकविशेषः वस्तुसामर्थ्यापरपर्यायः सर्ववस्तुषु सर्ववादिभिरङ्गीकार्यः । यद्यपि भेदवद् विशेषोपि न पदार्थान्तरम् । धर्मिणाऽभिन्नत्वात् । अथापि विशेषाख्यमपूर्वपदार्थान्तरं साधयितुमेव पृथङ्-निर्देशः कृतः । अयं च श्रीमदानन्दतीर्थभगवत्पादैरेव प्रथमं प्रतिपादितम् इत्यादयः विषयाः प्रतिपादिताः ।

विशिष्टांशि-उभयविवेके विशिष्टव्यवहारविषयो विशिष्टम् । तच्च विशेषणविशेष्यसम्बन्धादतिरिक्तमेव । तदपि द्रव्यविशिष्टं गुणविशिष्टम् इत्यादिभेदेन षड्विधमित्यादयः विषया निरूपिताः ।

अभावविवेके निषेधमुखवेद्योऽभावः । प्राक्-प्रध्वंस-सदात्वेन त्रिविधः । एवमत्यन्ताभावः सर्वोऽप्यप्रामाणिकप्रतियोगिकः न कश्चिदपि प्रामाणिकप्रतियोगिकः इत्यादयो विषयाः सुष्ठु प्रतिपादिताः ।

## पदार्थविवेकस्य वैशिष्ट्यम्

लघुपदार्थविवेकः इत्यपरः ग्रन्थोऽप्यत्र निवेशितः । अयमपि श्रीरघुनाथतीर्थैः पूर्वाश्रमे विरचितः । तर्कसङ्ग्रह-तर्कदीपिकयोः यथा व्याख्येय-व्याख्यानभावः दृश्यते, तथाऽनयोः व्याख्येय-व्याख्यानभावः नास्ति । अथापि लघुपदार्थविवेके सङ्क्षेपेण यदुक्तं तदेव पदार्थविवेके विस्तृतम् । पदार्थविवेकसाररूपत्वादयमत्र निवेशितः । अयमपि पूर्वमप्रकाशितः ।

पदार्थविवेकोऽयं ग्रन्थः मुनित्रयेण विरचितान् अनुव्याख्यान-न्यायसुधा-तर्कताण्डवादिग्रन्थानवलम्ब्यैव विरचितः । बहून्यत्र तान्येव वाक्यानि दरीदृश्यन्ते । एवं न्यायवैशेषिकपद्धत्यनुसारेण वेदान्तशास्त्रं प्रविविक्षूणामानुकूल्याय निबद्धश्च । तर्कदीपिकाग्रन्थस्य रचनानन्तरमेव अयं ग्रन्थः

विरचित इति भाति। अत एव तत्र यादृशक्रमोऽनुसृतः सक्रम एव अत्रापि स्वीकृतः। बहुषु स्थलेषु तत्र निरूपिता विषयाः खण्डिताः।

एवं पदार्थसामान्यलक्षणनिरूपणावसरे अनुगतजातेरनङ्गीकारात् लक्षणलक्षणस्य अव्याप्तिशङ्कायां "अत्राहुः साम्प्रदायिकाः" इति सादृश्य-घटितलक्षणनिर्वचनेन सम्प्रदायविदां मतमत्र प्रकाशितम्।

यद्यपि पद्मनाभसूरिभिः रचितः पदार्थसङ्ग्रहोऽपि द्वैतसिद्धान्तानुसारि-प्रमाणप्रमेयपरिचायकः। अथापि तदध्ययने व्याख्यानस्य आवश्यकता दृश्यते। तद्व्याख्यानस्य मध्वसिद्धान्तसारस्याश्रये महान् क्लेशोऽनुभूयते। पदार्थसङ्ग्रह-मध्वसिद्धान्त- सारयोः द्वैतसिद्धान्ताध्येतॄणाम् अत्युपकारकत्वे न कोऽपि सन्देहः। किन्तु विद्यार्थिनामध्ययनवेलायां मध्वसिद्धान्तसारस्यातिविस्तृतत्वा त् विपुलतया प्रमाणानामुदाहृतत्वात् क्लेशोनुभूयत इत्येव ममाभिप्रायः। अत्र तु तादृशक्लेशो नास्ति। अयं ग्रन्थः पठ्यपुस्तकरीत्या यदि स्वीक्रियते तदा विद्यार्थिनाम् अत्युपकारको भवतीत्यत्र न कश्चित् सन्देहः।

## ग्रन्थसम्पादनम्

मया आहृत्य मातृकात्रयमुपलब्धम्। एका मैसूरुप्राच्यविद्यासंशोधन-केन्द्रात् प्राप्ता। इयमपूर्णा अथापि शुद्धा। अतो मयेयं मूलमातृकात्वेन स्वीकृता। अत्र ग्रन्थकर्तुः नाम न निर्दिष्टम्। द्वितीया डा॥ वि. श्रीनिधिमहाभागैः पूर्वं संशोधिता। इयमप्यपूर्णा। अत्र तु कपाठत्वेन निर्दिष्टः। अत्र ग्रन्थकर्तुः नाम श्रीरघुनाथतीर्थ इति ग्रन्थान्ते निर्दिश्यते। तृतीया रजत-पीठपुरस्थश्रीकृष्णापुरमठीयग्रन्थालयात् प्राप्ता। इयं सम्पूर्णा। परन्तु अशुद्ध-तमा। अत्र खपाठत्वेन निर्दिष्टा। मया तु न्यायसुधातर्कताण्डवादिग्रन्थान् अवलम्ब्य शुद्धः पाठः संयोजितः। अत्र ग्रन्थकर्तुः नाम श्रीरामचन्द्राचार्य इति

निर्दिष्टम्। अत एव श्रीरघुनाथतीर्थानां पूर्वाश्रमनाम श्रीरामचन्द्राचार्य इत्यूह्यते। मयाऽत्र संवादितया न्यायसुधातर्कताण्डवादिवाक्यानि अधोभागे उदाहृतानि।

## कार्तज्ञ्यसमर्पणम्

मम विद्यागुरूणां पद्मविभूषणादिबिरुदाङ्कितानां परमपूज्यश्रीविश्वेश-तीर्थश्रीपादानां चरणकमलयोः साष्टाङ्गं प्रणतिततीः समर्पये।

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानस्य संस्थापकाः एवं मार्गदर्शकाः श्रीव्यास-राजमठाधीशाः श्रीविद्याश्रीशतीर्थश्रीपादाः। मम एतादृशावकाशप्रदानेन महदनुग्रहं कृतवद्भ्यः श्रीपादेभ्यः सभक्तिश्रद्धं प्रणमामि।

मातृकाप्रदानेन महदुपकारं कृतवद्भ्यः श्रीकृष्णापुरमठाधीशेभ्यः परम-पूज्यश्रीविद्यासागरतीर्थश्रीपादेभ्यः सभक्तिश्रद्धं प्रणामान् समर्पयामि।

आमूलाग्रं ग्रन्थं वीक्ष्य सूक्तमार्गदर्शनकृतवते श्री पि.एस्. शेषगिरि आचार्यमहोदयाय प्रणामान् समर्पयामि।

प्रतिष्ठानस्य निदेशकमहोदयाय डा॥ डि.पि.मधुसूदनाचार्यमहाभागाय हार्दं कार्तज्ञ्यं निवेदयामि।

लघुपदार्थविवेकस्य एवं पदार्थविवेकस्य च मातृकाप्रदानेन साहाय्यं कृतवते डा॥ वि.श्रीनिधिमहाभागाय कार्तज्ञ्यं समर्पये।

एवं कृष्णापुरमठात् प्राप्तायाः तुळुलिप्याः लिप्यन्तरकर्मणि महदुपकारं कृतवते श्री एस्.बि. कृष्णमूर्तिमहाभागाय हार्दं कार्तज्ञ्यं निवेदयामि।

टङ्कनकर्मणि बहुनिष्णाताय श्रीसुब्बण्णाचार्य केम्पदाळिहळ्ळि महा-भागाय हार्दं कार्तज्ञ्यं निवेदयामि। अतिसुन्दरतया मुद्रापितवते श्रीश्रीनिवास

महाभागाय कार्तज्ञं निवेदयामि। एवं परोक्षतयाऽपरोक्षतया वा उपकृतवद्भ्यः सर्वेभ्योऽपि कार्तज्ञं निवेदयामि।

अस्याध्ययनेन विद्वज्जनाः यदि सन्तोषं प्राप्नुयुः तदा सफलोऽयं श्रमो मम विनिवेद्य विरमामि।

सम्पादकः
विद्वान् के.वि.एन्. प्रसन्नाचार्यः
उपनिदेशकः; व्यासतीर्थसंशोधनप्रतिष्ठानम्
मैसूरु

# विषयानुक्रमणिका



## पदार्थविवेकः

* * * * * *

**श्रीहनुमद्भीममध्वान्तर्गतनरहरिरामकृष्णवेदव्यासाय नमः**

**॥ श्रीगुरुभ्यो नमः ॥**

**श्रीवेदव्यासाय नमः**

# पदार्थविवेकः

## मङ्गलाचरणम्

जानकीवदनाम्भोजभानवे गतये सताम् ।
नमः श्रीरामचन्द्राय हेतवे सर्वसम्पदाम् ॥[1]

## अनुबन्धचतुष्टयम्

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा[2] ॥

एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत्[3] ॥

इत्यादिना भगवज्ज्ञानस्य तदनुबन्धिजगत्सृष्ट्यादिज्ञानस्य च मोक्षहेतुत्वस्य तयोश्च जिज्ञासासाध्यत्वस्य च प्रमितत्वात्, अन्यैरन्यथानिरूपितत्वाच्च, पदार्था निरूप्यन्ते। यद्यप्येते तत्र तत्र

---

1 अयमेव मङ्गलश्लोकः श्रीरघुनाथतीर्थविरचितबृहतीसहस्रव्याख्याने तत्वसारेऽपि पठ्यते ।

2 म.भा.ता.नि.१-८३

3 स्कान्दवचनम् - गीताभाष्ये (४-९)

निरूपिता एव। तथाऽपि न मालारूपेणेति न दोषः[1]। पदार्थानां निरूपणं नाम प्रमाण-उद्देश-विभाग-लक्षणपरीक्षादिभिः परिशोधनात्मको विचारः। आक्षेपसमाधानं

## प्रमाणसामान्यलक्षणम्

तत्र तावत् प्रमाणलक्षणमुच्यते। यथावस्थितज्ञेयविषयीकारित्वं प्रमाणत्वम्[2]। अत्र यथावस्थितज्ञेयविषयीकारित्वं लक्षणम्। प्रमाणपदवाच्यमिह लक्ष्यम्। 'यस्य लक्षणमुच्यते तल्लक्ष्यम्' इति न्यायात्[3]।

### विवक्षितलक्ष्यनिष्कर्षः

ननु प्रमाणपदवाच्यानि प्रमा-तत्साधन-तत्कर्तृसेतुमर्यादादीनि[4] बहूनि सन्ति। तानि सर्वाण्यपि किं लक्ष्यम् उत न इति। उच्यते। [5]'प्रमितिः प्रमाणम्' इति भावव्युत्पत्त्या, 'प्रमीयतेऽनेन' इति करणव्युत्पत्त्या च प्रमाणपदवाच्यं प्रमा तत्साधनं

---

1 न मालारूपेणेत्यदोषः - क.

2 ०यीकारि प्रमाणम् - क.पाठः। यथार्थं प्रमाणम् - इति प्रमाणलक्षणे

3 यावदन्यतो व्यावर्तनीयं यावति च एकः शब्दः व्युत्पादनीयः तदुच्यते लक्ष्यमिति - प्रमाणपद्धतौ

4 तदधिकरणादीनि - इति क.पाठः।

5 प्रमितिः प्रमाणम्, प्रमीयतेऽनेनेति प्रमाणमिति भावकरणयोः प्रमाणशब्दस्य सामर्थ्यात् - न्या.सु. २-१-२

चेति द्वयमेव लक्ष्यम्। नाधिकरणकर्तृसेतुमर्यादादीनि। न हि तान्त्रिकाः शास्त्रेषु तदधिकरणादीनि प्रमाणत्वेन व्यवहरन्ति। शास्त्रीयव्यवहारसिद्ध्यर्थं हि [1]प्रमाणानां लक्षणकथनम्। तदेवं प्रमातत्साधनयोरेव प्रमाणत्वेन व्यवहाराल्लक्ष्यत्वम्।

## दलकृत्यविचारः

ननु विषयीकारित्वमात्रं प्रमाणलक्षणमस्तु, शिष्टं व्यर्थमिति चेन्न। 'ग्रामं गच्छति' 'स्वर्गमिच्छति' इत्यादिव्यवहाराद् गम्येष्टरूपविषयकगतीच्छयोरतिव्याप्तिः स्यात्। तदर्थं 'ज्ञेये'ति। तत्र ग्रामस्वर्गयोर्गम्येष्टत्वान्न ज्ञेयता। यद्यपि ज्ञेयत्वं केवलान्वयिधर्मः। सर्वस्यापि ज्ञानविषयत्वयोग्यत्वात्। तथाऽपि ज्ञानविषयत्वफलोपाधानाभावेन[2] न तत्रातिव्याप्तिः। तावत्युक्ते शुक्तिरूप्यादिज्ञाने तत्साधनदुष्टेन्द्रियादौ चातिव्याप्तिः। तदर्थम् 'यथावस्थिते'ति ज्ञेयविशेषणम्। यथावस्थितमेव वस्तु विषयीकरोति यज्ज्ञानम् इन्द्रियादि च[3] तत् इत्यर्थः। शुक्तिरूप्यज्ञानम् इन्द्रियं[4] वा न तथाऽयथावस्थितरूप्यादिविषयीकरणात्।

---

1 प्रमाणादीनाम् - क.पाठः।

2 न च गमनोपाधिना गमनेन वा निमित्तेन ग्रामो ज्ञेयः। किन्तु गम्य एव। – न्या.सु. २-१-२

3 वा इति क पाठः। च इत्येव पाठः साधु।

4 दुष्टेन्द्रियमित्यर्थः।

'अहं सुखी' 'इदम् इत्थमेव' 'सः देवदत्तः' इत्यादिप्रमायां शब्द-स्पर्श-रूप-रस-गन्धादिविषयिण्यामनुमित्यादिरूपिण्यां च प्रमायां [1]साक्षाद् यथावस्थितज्ञेयविषयीकारित्वम्, तत्साधनेषु साक्षि-बुद्धि-मनः-श्रोत्र-त्वक्-नयन-रसन-घ्राणेषु अनुमानादौ च [2]परम्परया यथावस्थितज्ञेयविषयीकारित्वमस्तीति विशिष्टलक्षणस्य लक्ष्यद्वये समन्वयः। तदेवमतिव्याप्त्यादिदूषणत्रयराहित्यात् [3]लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तित्वरूपं लक्षणलक्षणं प्रमाणलक्षणेऽस्ति।

ननु विशिष्टस्यापि लक्षणस्य प्रमातृप्रमेयाधिकरणादिष्वतिव्याप्तिः। तेषां च – चक्षुरादीनामिव प्रमोपकारकत्वेनावश्यकतया परम्परया ज्ञेयविषयीकारित्वसद्भावात्। उच्यते – स्यादेवं यदीन्द्रियाणामिव साधनत्वं स्यात्। नन्वेवम्। प्रमात्रादीनामुपकारकत्वमात्रेण[4] कारकत्वसद्भावेऽपि प्रकृष्टकारणत्वरूपसाधनत्वाभावात्।

---

1 ज्ञानमेव हि विषयस्य ज्ञेयस्य ज्ञेयतायां साक्षादुपाधिर्भवति। – न्या.सु. २.१.२

2 युक्त्यादिकरणानि तु विषयस्य ज्ञेयतायाम् उपाधिभूतं ज्ञातं जनयन्तीति तद्विषयस्य ज्ञेयत्वम् अमुख्यम् – न्या.सु. २-१-२

3 लक्ष्येतरव्यावृत्तित्वे सति - क पाठः। लक्ष्यमात्रव्यापको धर्मः लक्षणम् - इति प्रमाणलक्षणटीकायाम्।

4 कत्वेन - क.पाठः।

## करणत्वनिष्कर्षः

ननु किमिदं कारणत्वम्? उच्यते – अनन्यथासिद्धनियत[1]-पूर्वभावित्वं कारणत्वम्। यथा घटस्य कुलालदण्डादि। यद्यपि आकाशादिरपि नित्यत्वात् सर्वगतत्वात् घटादेः पूर्वभावि। तथापि नासावनन्यथासिद्धः। अन्यत्र क्लृप्तपूर्ववृत्तिन एव कार्यसम्भवे तत्सहभूतमात्रत्वरूपान्यथासिद्धिलक्षणाक्रान्तत्वात्। अत एव दैवादागतरासभादेर्व्यावृत्तिः।

## कारणविभागः

तच्च कारणं द्विविधम्। उपादानकारणं निमित्तकारणं चेति। यो यदात्मना विक्रियते[2] स तस्योपादानम्। यथा मृत्पिण्डः कम्बुग्रीवादिविशेषसंस्थानवत् (स्थानविशेषवत्) घटाकारेण विकुर्वन् घटादेरुपादानम्। तद्भिन्नं कारणं निमित्तकारणम्। यथा दण्डादिः घटस्य।

## साधनलक्षणम्

उभयविधस्य कारणस्य मध्ये यत्प्रकृष्टकारणं[3] तत्साधनमुच्यते। यज्जातीयानन्तरमेव नियमेन कार्योत्पत्तिः तत्साधनमिति यावत्। तथाच कुठारादीनां तज्जातीयानां कुठारान्तरादीनां

---

1 नियतपदं क पाठे दृश्यते। तदेव समीचीनमिति स्वीकृतम्।

2 विकरोति - क.पाठः।

3 प्रकृष्टं कारणं - क.पाठः।

च नियमेन छिदिक्रियाजनकत्ववत्प्रमातुः [1]प्रमात्रन्तराणां च प्रमाजनकत्वनियमाभावेन प्रमासाधनत्वाभावात्। परम्परया इन्द्रियाणामिव न यथावस्थितज्ञेयविषयीकारित्वं नापि सविषयस्वभावानां ज्ञानेच्छाकृतीनामिव साक्षादेव यथावस्थितज्ञेयविषयीकारित्वमिति न विशिष्टलक्षणस्य प्रमात्रादावतिव्याप्तिः। शिष्टमग्रे वक्ष्यते।

## प्रमाणादीनां आवश्यकत्वसमर्थम्

तदेवं 'मानाधीना मेयसिद्धिः' इति न्यायेन पदार्थस्वरूपसिद्ध्यर्थं प्रमाणमवश्यं वक्तव्यम्। एवमुद्देशविभागलक्षणपरीक्षाश्च कर्तव्याः। लिलक्षयिषितपदार्थोद्देशा[2]भावे लक्षणकथनानुपपत्तेः। [3]विभागाभावे तत्स्वरूपविशेषजिज्ञासानुपपत्तेः। [4]लक्षणाभावे सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणानुपपत्तेः। [5]परीक्षाभावे संशयविपर्ययाद्यनिवृत्तेः।

---

1 प्रमात्रान्तरस्य - क.पाठः।

2 नाममात्रवस्तुसङ्कीर्तनम् उद्देशः। स च लक्षणाद्युक्तिसम्भावनार्थः। अनुद्दिश्यकस्य लक्षणादि ब्रूयात् – इति प्रमाणलक्षणटीकायाम्

3 विधा = विभागः। अवान्तरभेदकीर्तनमित्यर्थः। तदुक्तिः अवान्तरोद्देशार्था। – इति प्रमाणलक्षणटीकायाम्।

4 लक्ष्यमात्रव्यापको धर्मः लक्षणम्। तदुक्तिः शब्दव्यवहारार्था इति प्रमाणलक्षणटीकायाम्।

5 युक्तायुक्तचिन्ता परीक्षा। – इति प्रमाणलक्षणटीकायाम्

तदेवं प्रमाणादीनामावश्यकत्वसिद्धेः प्रमाणलक्षणमुक्तम्। वक्ष्यते च।

## पदार्थसामान्यलक्षणम्

इदानीं पदार्थस्य लक्षणं तावदुच्यते। तत्र प्रमितिविषयत्वं पदार्थसामान्यलक्षणम्।

### दळकृत्यविचारः

नन्वत्र [1]प्रोपसर्गो व्यर्थः। न च शशशृङ्गादौ मितिविषयत्वस्य [2]सत्वात् अतिव्याप्तिः। तद्वारणायोपसर्गः तदर्थश्च प्रकृष्टत्वम्। मितेः प्रकृष्टत्वं च याथार्थ्यमेवेति यथार्थज्ञानविषयत्वस्य लाभेन शशशृङ्गादौ नातिव्याप्तिरिति वाच्यम्। दत्तेऽपि[3] दोषतादवस्थ्यात्।

तथाहि– किं तत्र शशादिः न [4]प्रमाविषयोत शृङ्गादिरथवोभयसम्बन्धः। नाद्यद्वितीयौ। शशादीनामसत्त्वापातात्। न तृतीयः। शशशृङ्गयोः सम्बन्ध आकाशादिना सन्नेवेति तस्यापि प्रमाविषयत्वात्। शृङ्गनिरूपितः सम्बन्धः शशधर्मिकः न प्रमाविषय इति चेन्न। तस्यापि ईश्वरप्रमाविषयत्वात्। अन्यथा

1 प्रपदो - क.

2 सद्भावात् - क.

3 विशेषणे तद्दो - क.

4 प्रमाऽविषयः - क.

ईश्वरस्य सार्वज्ञं न स्यात्। किञ्च तादृशसम्बन्धस्य व्यवसाय-रूपप्रत्यासत्त्याऽनुव्यवसाये भानमावश्यकम्। अनुव्यवसायश्च प्रमैवेति सर्वसम्मतिः।तथाच – शशशृङ्गज्ञानवानहमित्यनुव्यवसाय-रूपप्रमाविषयत्वात् कथं नातिप्रसक्तिः। किञ्च नेदं शशशृङ्गं किन्तु कर्णादि इति निषेधप्रमाविषयत्वमस्ति। किञ्च सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्यय इति न्यायेन धर्म्यंशे प्रमाविषयत्वस्य सत्वादतिव्याप्तिः। न च प्रकारे विपर्ययत्वस्यापि सत्वात् नैवमिति वाच्यम्। अस्तु तथापि धर्म्यंशे प्रमात्वस्या-परिहारात्।

उच्यते – स्यादेतत्। [1]यद्यापणादिस्थमेव रजतं दोषवशात् शुक्त्यादित्वेन भासत इति सिद्धान्तः स्यात्। नैवम्। किन्तु, [2]अत्यन्तासद्रजतादिकं दोषवशाद् शुक्त्याद्यात्मना प्रतिभासत इति हि सिद्धान्तः। एवं सति कथमतिप्रसक्तिः। इदमंशस्य प्रमाविषयत्वेऽपि तुच्छस्य शशशृङ्गतत्सम्बन्धादेः प्रतीयमानस्य प्रमाविषयत्वाभावात्। धर्म्यंशे प्रमामादाय प्रकारे प्रमाविषयत्व-वर्णनं तु व्यधिकरणम्। न हीश्वरस्यात्यन्तासतोऽज्ञाने सार्वज्ञ-हानिः। यच्च ज्ञानलक्षणप्रत्यासत्त्याऽनुव्यवसायविषयत्वेन वा,

---

1 अयं सिद्धान्तः नैयायिकमते

2 असदेव रजतं प्रत्यभात् इत्युत्तरकालीनानुभवात् शुक्तिरेव अत्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः – इति प्रमाणपद्धतौ

नेदं श्रृङ्गं किन्तु कर्णादिरेव इति निषेधप्रमाविषयत्वेन वाऽतिप्रसक्तिवर्णनम्, तत् साक्षात् प्रमाविषयत्वस्य विधिरूपप्रमाविषयत्वस्य वा विवक्षणेन[1] निरस्तम्। न ह्यनुव्यवसायादिः साक्षात् शशश्रृङ्गं विषयीकरोति, न वा 'अस्ति' इति विधिरूप इति न दत्तेऽपि [2]प्रोपसर्गे दोषतादवस्थ्यम्।

विशेष्यपदोपादानेनाप्रमित्यात्मके [3]घटादौ अव्याप्तिनिरासः।

नन्वेवं तर्हि प्रमितौ प्रमित्यन्तराविषयत्वेनानवस्थापातेन उक्त[4]लक्षणाभावेनाव्याप्तिरिति चेन्न। प्रमितावपि साक्षिविषयत्वस्य साक्षिणः स्वप्रकाशत्वस्य च वक्ष्यमाणत्वेन लक्षणसद्भावादिति सङ्क्षेपः।

**लक्षणस्य दोषत्रैविध्यनिरूपणम्**

नन्वथापि स्यात्। [5]लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तित्वं लक्षणलक्षणम्। लक्षणस्य हि त्रीणि दूषणानि।

1 विवक्षितत्वेन - क.

2 चोपसर्गे - क.

3 घटादावतिव्याप्तिनिरासः - क.। अत्र अव्याप्तिरेव न तु अतिव्याप्तिः, अयं तु प्रायः लिपिकाराणां दोषः। प्रमितिः लक्षणमित्युक्ते घटादावव्याप्तिः। अतः प्रमितिविषयत्वं लक्षणमिति भावः।

4 लक्षणाभावात् - क.

5 यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मः लक्षणम् - इति प्रमाणपद्धतौ

अतिव्याप्तिरव्याप्तिरसम्भवश्चेति। लक्ष्येतरवृत्तित्वे सति लक्ष्य-वृत्तित्वम् अतिव्याप्तिः। लक्ष्यैकदेशमात्रवृत्तित्वम् अव्याप्तिः। लक्ष्यमात्रनिष्ठात्यन्ताभावप्रतियोगित्वम् असम्भवः। तथाच – अतिव्याप्ताव्याप्तश‍ृङ्गित्वशबलत्वादौ लक्षणलक्षणस्यातिव्याप्तिवारणाय सत्यन्तं (1) सकललक्ष्यपदं च।

## लक्षणलक्षणस्य प्रमाणलक्षणे अव्याप्तिकथनम्

ततश्चेह प्रमितिविषयत्वे पदार्थसामान्यलक्षणेऽलक्षणलक्षणाभावः, लक्षणलक्षणभावश्च वक्तव्यः। अन्यथाऽलक्षणत्वप्रसङ्गात्। स चेह नास्ति। तथाहि – न तावदलक्षणाभावः। (2)'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति वचनेन पदार्थानामनुगतधर्मनिषेधपूर्वकं तत्तद्धर्मिमात्रवृत्तिधर्मवत्त्वाङ्गीकारेण द्रव्यनिष्ठस्यैतद्घटनिष्ठस्य वा प्रमितिविषयत्वस्य लक्ष्यभूते गुणकर्मादौ घटान्तरे वा एतद्घटत्वस्य घटान्तर इवासत्वनियमेन लक्ष्यनिष्ठात्यन्ताभावप्रतियोगित्वसम्भवात्। एवं लक्ष्यनिष्ठत्वे सति लक्ष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपं लक्ष्यैकदेशावृत्तित्वात्मकमव्याप्तलक्षणं सुघटमेवेति।

## स्वमतरीत्या परिष्कृतलक्षणलक्षणस्य प्रमाणलक्षणे समन्वयः

1 विशेष्यदलघटकलक्ष्ये साकल्यं च निवेशनीयम् - कपाठः.

2 अनुव्याख्याने २-२-१२४

अत्राहुः साम्प्रदायिकाः – ‘लक्ष्यजातीयेतरावृत्तित्वे सति लक्ष्यजातीयमात्रे साक्षात् परम्परया वा वृत्तिर्लक्षणलक्षणम्। यो धर्मः स्वाश्रयसजातीयानन्तव्यक्तिषु स्वप्रतियोगिकसादृश्यधर्मिक-धर्मान्तराश्रयत्वेन वा[1] स्वनिष्ठसादृश्यप्रतियोग्याश्रयत्वेन वा सम्बन्धेन वर्तते, न वर्तते च अलक्ष्यजातीयानन्तव्यक्तिषूक्त-सम्बन्धद्वयेन स धर्मो लक्षणम्’ – इति निष्कर्षः। स्वशब्द-विवक्षितद्रव्यनिष्ठप्रमितिविषयत्वप्रतियोगिकं यत्सादृश्यं – गुण-निष्ठप्रमितिविषयत्वरूपधर्मान्तरनिष्ठसादृश्यम्, तद्धर्मिभूतानि यानि धर्मान्तराणि गुणादिनिष्ठप्रमितिविषयत्वानि, तेषां ये आश्रयाः गुणादयः, तथाभूतत्वसम्बन्धः गुणादिनिष्ठः। तथाच – धर्मित्व-रूपसाक्षात्सम्बन्धेन द्रव्यनिष्ठप्रमितिविषयत्वानाश्रयोऽपि गुणा-दिः परम्परासम्बन्धेन द्रव्यनिष्ठप्रमितिविषयत्वाश्रयो भवति। एवं स्वशब्दविवक्षितानि यानि गुणादिनिष्ठप्रमितिविषयत्वानि तन्निष्ठानि यानि सादृश्यानि तत्प्रतियोगिभूतं द्रव्यनिष्ठप्रमितिविषयत्वं तदा-श्रयत्वं द्रव्ये। तथाच [2]साक्षात्सम्बन्धेन धर्मिताख्येन गुणादि-निष्ठप्रमितिविषयत्वानाश्रयोऽपि द्रव्यम् उक्तपरम्परासम्बन्धेन गुणादिनिष्ठप्रमितिविषयत्वाश्रयो भवति। एवमाभ्यां सम्बन्धाभ्यां

---

1 स्वपदेन धर्मो गृह्यते। तत्प्रतियोगिकसादृश्यस्य धर्मी धर्मान्तरं भवति। तदाश्रयत्वरूपसम्बन्धेन तत्र स्वपदोपात्तधर्मो वर्तते।

2 धर्मित्वरूपसाक्षात्सम्बन्धेन - क.

प्रमितिविषयत्वरूपो धर्मः स्वाश्रयस्य द्रव्यस्य[1] लक्ष्यताघटक-सत्स्वरूपत्वादिना सजातीयेषु गुणकर्मादिषु वर्तते, न वर्तते च निःस्वरूपत्वेन विजातीये तुच्छे। तत्र प्रमितिविषयत्वप्रतियोगिक-सादृश्यधर्मिभूतधर्मान्तराभावेन तदाश्रयत्वरूपसम्बन्धाभावात्।

यद्यपि [2]प्रमितिविषयत्वसदृशं प्रतियोगित्वा-नुयोगित्वज्ञेय-त्वा-भिधेयत्वादिधर्मान्तरं तुच्छेप्यस्ति। तथाऽपि [3]सत्स्वरूपत् वादिंप्रयुक्तान्तरङ्गसादृश्यस्य[4] प्रतियोगित्वादावभावात्। न हि धर्मिसत्तानिरपेक्षं प्रतियोगित्वादिकं तत्सापेक्षप्रमितिविषयत्वादि-सदृशं भवति। अत एव यावत्सादृश्यस्य असम्भवात्[5] यत्कि-ञ्चित्सादृश्यस्य तुच्छेऽतिप्रसङ्गित्वेन सादृश्यघटितं लक्षणमनुप-पन्नमिति परास्तम्।

---

1 स्वाश्रये द्रव्ये - क.

2 सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते।
तथापि प्राप्तितस्त्वेकवचनाच्च विशेषतः॥
अभीष्टावागतिश्च स्याच्छक्तिः सादृश्यगा यतः।
तादृशोयं च तच्छब्दः इति ज्ञापयति स्फुटम्॥ अनु. २-२-१२७

3 सत्स्वरूपत्वं = पुरोवर्तिगोत्वनिष्ठम्; न्यायदीपे स्वरूपसत्सादृश्यं = पुरोवर्तिगोत्वनिष्ठं साद्दंश्यम् - (५६१)

4 अन्तरङ्गसादृश्यं = गवयादिव्यावृत्तम् अन्तरङ्गं सास्नादिमत्वगोत्वादि-प्रयुक्तसादृश्यम् - तर्कताण्डवं द्वितीयपरिच्छेदे (५५५)

5 अन्तरङ्गसादृश्यस्यासम्भवात् - क.

तथाचोक्तरीत्या द्रव्यनिष्ठप्रमितिविषयत्वस्य सकललक्ष्येषु गुणादिषु वृत्तेः, अलक्ष्ये तुच्छे तु अवृत्तेः नोक्तदोष इति लक्षणमिदम् अनवद्यम् ।

## पदार्थविभागः

ते च पदार्थाः[1] द्रव्य-गुण-कर्म-सामान्य-विशेष-विशिष्ट-अंशि-अभाव[2]भेदेन अष्टधा भिद्यन्ते । अन्ये तु द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय-अभावभेदेन पदार्थान् [3]सप्तविधानाहुः । ते च प्रामाणिकपरित्यागाद् अप्रामाणिकस्वीकाराच्च निरस्ताः । यथा चैतत् तथाऽग्रे दर्शयिष्यते ।

यद्यप्येवं विभागे भगवत्प्राधान्यं न सेत्स्यतीति 'स्वतन्त्रमस्वतन्त्रं च[4]' इत्यादिनाऽऽचार्यैः पदार्था अन्यथा विभक्ताः । तथाप्यस्य प्रकरणस्य पदार्थविवेचनमात्रार्थत्वादयमपि विभागो नायुक्तः । तर्ह्यत्र भगवत्प्राधान्यं न ज्ञायेतेति चेत्, न ह्यत्राचार्यवचनं तिरोहितमस्ति ।

---

1 तत्र द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावाः दश-पदार्थाः – इति पदार्थसङ्ग्रहे ।

2 अंशि-अभाव इति क.पाठः । यद्यपि मूलकोशे स्वभाव इति दृश्यते, तदनन्वितम्; अतः कपाठः एव स्वीकृतः ।

3 सप्तविधाः पदार्थाः इत्याहुः - क.

4 तत्वसङ्ख्याने -१

ननु कर्मसामान्यविशेषादीन्[1] अप्रधानत्वधर्मत्वानुपादानत्वादिसाम्येन[2] गुणेऽन्तर्भाव्य 'द्रव्यगुणौ द्वावेव' इत्यादि प्रकारान्तरेण विभागसम्भवे कुतोऽयमष्टधेति नियमः। मैवम्।[*]

'गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः'[3] इत्यादिना कर्मादीनां विभिन्नत्वेन प्रमितत्वात्।

1 विशेषाभावाः - क.

2 मूलकोशे सामान्येन इति दृश्यते; अयं च प्रामादिकः।

3 तत्वविवेके -९

(*) "कार्यकारणयोश्चैव तथैव गुणतद्वतोः।
क्रियाक्रियावतोश्चैव तथा जातिविशेषयोः।
विशिष्टशुद्धयोश्चैव तथैवांशोंशिनोरपि ॥"

इत्यादिवचनेषु कारणशब्दितद्रव्येन सह गुणदीनां परिगणनात्। अयमेव विभागो न्याय्यः। सफल आदरणीयश्च। नान्यो विभाग आदरणीयः। नहि कर्मादीनां गुणान्तर्भावे कश्चिन्न्यायोस्ति। अप्रधानत्वात्। क्वचिद्द्रव्यादिष्वभावात्। फलवैधुर्याच्च। उक्तविभागस्य कार्यकारणयोरित्यादिना प्रमितत्वात्। तज्ज्ञानस्य फलकल्पनावच्छङ्कितभागस्याप्रमितत्वेन तदकल्पनात्। अत एव जन्मादिसूत्रे आदिपदेन अष्टकस्यैव ग्रहणम्। न पुनः सुखदुःखादेः। अप्रमितत्वात्।

यथोक्तम् – यद्यपि चेतनस्थानि सुखदुःखादीनि अचेतनस्थानि वृद्ध्यादीन्यपि सन्ति तथापि विचारविधायकनानावाक्यपरामर्शे स्कान्दे सूत्रकृतैककर्तृत्वस्यैव लक्षणत्वेनोक्तत्वादत्रापि तस्यैव विवक्षणीयत्वान्न दोषः। यद्वा सर्वैर्मुमुक्षुभिर्विशिष्याष्टकर्तृत्वस्येवान्यकर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहादिशब्दार्थ इत्यादिना चन्द्रिकायाम्। तथाचोक्तविभागः श्रद्धेयश्च (खपाठः)

अत्रैके चोदयन्ति - पदार्थस्वरूपमेव न सत्। सत्यपि तस्मिन् तदेकविधमेव। न द्वितीयम्। न सुतरां तृतीयमिति। मैवम्। 'घटः सन्', 'इमौ च घटपटौ स्तः' इत्यादि प्रत्यक्ष-विरोधात्। 'नास्त्येव तत्वम्' 'एकमेव तत्वम्' इत्यादेः ज्ञान-प्रामाण्याप्रामाण्ययोर्व्याघाताच्च।

## द्रव्यविवेकः

### द्रव्यादीनां सामान्यलक्षणम्

तत्र द्रव्यादीनां द्रव्यत्वाद्येव सामान्यलक्षणम्(1)।

### द्रव्यविभागः

तत्र द्रव्याणि(2) महद्-अहङ्कार-इन्द्रिय-मात्रा-भूत-अज्ञान-तमः-काल-देश-वर्ण-आत्मभेदेन एकादशविधानि। अत्र महदादि-भूतान्तानि पञ्चद्रव्याणि प्रकृत्यंशोपचितत्वात् प्राकृतानि। अज्ञा-नाद्यात्मान्तानि षड् द्रव्याणि उपचयाभावादप्राकृतानि। उपचय-स्तु उपबृंहणम्। वृद्धिरिति यावत्।

ननु -

---

1 द्रवणप्राप्यत्वं द्रव्यसामान्यलक्षणम्। द्रवणं च गमनम् - इति पदार्थसङ्ग्रहे।

2 तत्र द्रव्याणि। परमात्मलक्ष्मीजीवाव्याकृताकाशप्रकृतिगुणत्रयमहत्त-त्वाहङ्कारतत्त्वबुद्धिमनइन्द्रियमात्राभूतब्रह्मण्डाविद्यावर्णान्धकारवासना-कालप्रतिबिम्बभेदाद् विंशतिरेव – इति पदार्थसङ्ग्रहे।

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥[1][*]

इत्यादौ प्राकृतद्रव्याणि चतुर्विंशतिविधान्युच्यन्ते। अव्यक्त-सञ्ज्ञं प्रधानं चास्ति। तत्कथं पञ्चविधानीति चेन्न। उक्तेष्वेवान्तर्भावात्। तथाहि – [2]प्रधानाख्यस्य अव्यक्तस्य तावन्न महदादिभ्यः पृथगस्तिता सम्भवति। महदादिसूक्ष्मभागानामेव अव्यक्त-शब्दाभिधेयत्वात्[3]। सन्ति ह्येषां सर्वेषां तत्वानां सूक्ष्मभागाः

1 भागवते ३-२७-१२

2 न प्रधानाख्यस्य अव्यक्तस्य तावन्महदादिभ्यः पृथक्ता सम्भवति। – क.

3 यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्
– भाग. ३-२७-११; अनु १.-४-५६

(*) "महाभूतानि पञ्चैव भूरापोग्निर्मरुन्नभः।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे।
इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसनासिकम्।
वाक्करौ चरणौ मेढ्रं चायुर्दशममुच्यते" – इत्यादेः।

ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः।

यद्यपि – "परादव्यक्तमुत्पन्नम् अव्यक्तात्तु महांस्तथा।
विज्ञानतत्वं महतः समुत्पन्नं चतुर्मुखात्।
विज्ञानतत्वात्तु मनो मनस्तत्वाच्चखादिकम्" – इत्यादौ

गुणत्रयाभिधानमव्यक्ताख्यं विज्ञानाख्यं तत्वान्तरं श्रूयते। अतः तत्वानि षड्विंशतिरिति व्यक्तम्। (खपाठः)

सत्वरजस्तमोभेदेन प्रत्येकं त्रिविधा राशयः। 'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम्'[(1)] इत्यादेः।

तथाच - महदादिभूतान्तानां[(2)] सूक्ष्मभागा एव प्रधानाव्यक्तमूलप्रकृत्यादिसञ्ज्ञा इति महदादिशब्देनैव सङ्गृहीताः।(*)

---

1 तत्वविवेके -८

2 पृथिव्यान्तानां - क

(*) उत्पत्स्यमानतत्वानामुपादानभूतः 'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम्' इत्यादिना अनादिनित्याश्च। यदि च तेऽनादिनित्याः तदा कल्पान्तरेषु पुनःसृष्टिर्न स्यात्। उपादानभागाभावात्। भागान्तरकल्पने त्वनवस्था। तथाच यथान्यमते प्रळये विविक्ताः परमाणवः सृष्टिकाले परमेश्वरसिसृक्षावशात् संयुज्यन्ते ततः संयुक्ताः परमाणवः द्व्यणुकमारभन्ते द्व्यणुकं च त्र्यणुकमित्यादिक्रमेण स्थूलस्थूलतरादेः सृष्टिरङ्गीकृता। तथा सिद्धान्तेऽपि महदादिसूक्ष्मभागानां सत्वादिभेदभिन्नानां परमेश्वरस्य सिसृक्षावशात् ...जायते। परस्परसंसृष्टो भागो गुणत्रयशब्देनोच्यते। तावतैव तस्योत्पत्तिव्यवहारः। नतु महदादीनामेव द्रव्यान्तरेणोपचयः। गुणत्रयातिरिक्तस्य भागस्यानवस्थाभयेनानङ्गीकारात्। गुणत्रयस्य चेदंप्रथमत्वेन ततः पूर्वमभावात्। ततश्च गुणत्रयाभिधानैः सूक्ष्मभागैः – यथा देवदत्तः पङ्कादिभिः सूक्ष्मान् भित्तिकांशान् किञ्चित्स्थूलान् करोति तथा महदादिसूक्ष्मभागं किञ्चित्स्थूलान् करोति तदेव महत्तत्वमुच्यते। ततो महत्तत्वात्किञ्चिद्भागमुद्धृत्य अहङ्कारसूक्ष्मैः सह गुणत्रयेण परिणामयति। तदेवाहंद्रव्यमुच्यते। तस्माच्च किञ्चिद् भागमिन्द्रियसूक्ष्मैः सह गुणत्रयेण परिणामयति। एवं तत्वान्तराण्यपि स्थूलानि स्थूलतराण्युत्पद्यन्ते। एवं पृथिव्यन्तानां पूर्वपूर्वतत्वभागेन तत्तसूक्ष्मभागेन गुणत्रयेण च तत्वाना-

एवमिन्द्रियशब्देन द्वादशानाम्, मात्राशब्देन शब्दादिपञ्च-तन्मात्राणाम्, भूतशब्देन आकाशादिपञ्चानां सङ्ग्रहः ।

## महदादिभूतान्तानामुद्देशक्रमे औचित्यम्

अत्र महदादिभूतान्तानामुदेशक्रमे पूर्वपूर्वस्योत्तरोत्तरोपादान-त्वमुपचयाल्पत्वं च निमित्तम्। तथा हि – [1]गुणत्रयाभिधानैः सूक्ष्मभागैरीश्वरः महदादिसूक्ष्मभागान् किञ्चिदुपचितान् करोति। यथा देवदत्तः पङ्कादिभिः [2]सूक्ष्मान् भित्तिकांशान् किञ्चित्स्थूलान् रोति। [3]त एवोपचिताः भावाः चतुर्विंशतिधा महदादिपरमाणव

1 प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम्।
प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तमः ।। इति तृतीयतात्पर्ये (३-२७-२०)

2 तत्सूक्ष्मान् - क.

3 तथैवोपचिता - क.

(contd)मुत्पत्तिक्रमः स्वीक्रियते । तस्मादुक्तरीत्या पूर्वपूर्वस्योत्तरोत्तरं प्रत्युपादानत्वस्य उपचयाल्पत्वस्य च सम्भवादुद्देशक्रमो युक्त एव। एतेन बुद्धिमनसोपसङ्ग्रहादयुक्तोऽयं द्रव्यविभाग इति निरस्तम्। इन्द्रियशब्देन तयोः, महच्छब्देन विज्ञानतत्वस्य च सङ्ग्रहात्। यथा चैतत् तथाग्रे वक्ष्यते। तदनन्तरं भूतान्तरसम्बन्धान्तरङ्गसाधनत्वेनाज्ञानस्योद्देशः। कार्यमात्रनिमित्तत्वेनानन्तरं कालस्योद्देशः । वर्णात्मनां च प्रथमं बुद्ध्यनारोहादनन्तरम्। तत्रापि सर्वथा विकाराभावाद्देशस्यादावुद्देशः। तदनु आनुपूर्व्यादिना कथञ्चिद् विकारसम्भवेन वर्णस्य तदनु क्रियावेशादिलक्षणविकाराधिक्यादात्मन इति विवेकः। (खपाठः)

उच्यन्ते। उपचयाधिक्याभावेन सम्यक्सृष्ट्यभावादसंसृष्टाश्च[1] उच्यन्ते। तथाच महदीयाः परमाणवः द्व्यणुकादिक्रमेण महत्त्वमुत्पादयन्ति। तत आहङ्कारिकाः महत्तत्वभागसहिताः अहङ्कारतत्वमित्यादि वक्ष्यमाणक्रमेणोपादानत्वादिकमूह्यम्। एवं संसृष्टासंसृष्टभेदभिन्नानां महदादिभूतान्तानां पञ्चानामुद्देशे सिद्धे, सृष्टिरहितानाम् [2]अज्ञानाद्यात्मान्तानां षण्णां द्रव्याणामुद्देशः। तत्रापि यथासम्भवमानन्तर्ये निमित्तमूह्यम्।

## महत्तत्वविवेकः

### लक्षणम्

अथ [3]महत्त्वं जातिविशेषः। महानित्यनुभवमूलः। यद्यपि महदादिद्रव्यं घटपटादिवद् विविक्ततया न प्रत्यक्षम्। तथाऽपि कार्यमात्रस्य प्रायेण महदादिचतुर्विंशतितत्वजन्यत्वस्य आगमिकतया[4] अस्मदादिशरीरेषु महद्द्रव्यमङ्गीकर्तव्यम्[5]। अन्यथाऽ-

1 सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृत्याद्यंशैः उपचयमात्रं क्रियते इति तान्यसंसृष्टानि। न चैवं ब्रह्माण्डं तदन्तर्गतानि इति संसृष्टानि। – तत्वसङ्ख्यानटीकायाम्

2 अज्ञानादीनां - क.

3 साक्षाद्गुणत्रयोपादानकं महत्तत्वम् - इति पदार्थसङ्ग्रहे।

4 तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते लीयते।

5 महत्तत्त्वमिति द्रव्यविशेषस्येयं सञ्ज्ञा - न्या.सु. वै. २-२-६

स्मदादिशरीरे पृथिवीजलादेरपि घटादिवद् विवक्ततयाऽभानेन तदभावापत्त्या भौतिकत्वं न सिद्ध्येत्[1]।

अहङ्कारोपादानत्वं वा महत्तत्त्वम्। तच्च 'महत्तत्वाद् विकुर्वाणादहंतत्त्वमजायत' इत्यादौ प्रसिद्धम्। [2]अहङ्कारपरमाणुस्तूक्तरीत्या महत्तत्वभागे परिणामिनि सति सहैव परिणमति। तथाऽपि प्राधान्यं महत्तत्वस्यैवेति न तत्रातिव्याप्तिः। एवं भागान्तरेष्वपीति।

**विभागः**

तद् द्विविधम्। नित्यमनित्यं च। नित्यं सूक्ष्मरूपम्। अनित्यं द्विविधम्। असंसृष्टं संसृष्टं चेति। साक्षात् प्रकृतिमूलकम् असंसृष्टम्। यथा ब्रह्माण्डाद्बहिःस्थितं परमाणुरूपम्। परम्परया प्रकृतिमूलकं संसृष्टम्। यथा ब्रह्माण्डं तदन्तरूत्पन्नम्। एवमग्रेऽपि[3]। - इति **महत्तत्वविवेकः।**

* * * *

---

1 न चैतदिष्टम्। अनित्या पृथिवीति। अस्मदादीनां शरीरस्य पार्थिवत्वोक्तिविरोधात्। (खपाठः)

2 अहङ्कारः आहंङ्कारिकपरमाणुसूक्ष्मेभ्यो महत्तत्वभागैः परिणामिभिः सहैव परिणमति – क.

3 केचिदत्र महदादीनां तत्वानामन्तरुत्पत्तिं नेच्छन्ति । तेषां क्वचित् तत्वानामेवायं क्रमः श्रूयते च इत्यादि टीकाविरोधः। एवमग्रेपि।.... (खपाठः)

# अहंतत्वविवेकः

## लक्षणम्

[1]अहंत्वं जातिविशेषः। 'अहं करोमि' इत्यादिप्रतीतिमूलः। 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते'[2] इति वचनात्। इन्द्रियाद्युपादानत्वं वा अहङ्कारत्वम्। तच्चाहङ्कारत्वं 'तैजसानीन्द्रियाण्याहुः'[3] इत्याद्यागमसिद्धम्। तत्प्रकारश्चाग्रे वक्ष्यते।

## विभागः

अहङ्कारतत्वं द्विविधम्। नित्यमनित्यं चेति। नित्यं सूक्ष्मरूपमित्यादि पूर्ववत्। **इत्यहंतत्वविवेकः।**

# इन्द्रियविवेकः

## सम्भावित-इन्द्रियलक्षणविमर्शः

अथेन्द्रियं निरूप्यते। ननु किमिदमिन्द्रियत्वं ज्ञानसाधनत्वम् इन्द्रियजन्यज्ञानसाधनत्वं वा [4]अज्ञातकरणजन्यज्ञानसाधनत्वं

---

1 महत्तत्त्वोपादानकम् अहङ्कारतत्वम् – इति पदार्थसङ्ग्रहे।

2 भ.गी. ३-२७

3 तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः।
तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्। - भागवते -३
श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः ॥ भागवते – २.

4 अज्ञातकरणजन्यज्ञानानुवृत्तः ज्ञातकरणजन्यज्ञानव्यावृत्तः धर्मविशेषो वा -
– क.पाठः

वा साक्षात्कारिज्ञानसाधनत्वं वा। नाद्यः। अनुमानशब्दयोरतिव्याप्तेः। न द्वितीयः। इन्द्रियलक्षणे इन्द्रियपदप्रवेशेनात्माश्रयात्। न तृतीयः। अज्ञातकरणशब्दस्य इन्द्रियपर्यायत्वेनोक्तदोषतादवस्थ्यात्। न चतुर्थः। साक्षात्वस्य दुर्निरूपत्वात्। कथञ्चिदज्ञातकरणजन्यज्ञानानुवृत्तः ज्ञातकरणजन्यज्ञानव्यावृत्तो धर्मविशेषः साक्षात्वमिति निर्वचनमपि साक्षात्कारिज्ञानस्येन्द्रियजन्यज्ञानपर्यायत्वेनोक्तरीत्या आत्माश्रयापातात्[1]।

चतुर्णामपि लक्षणानां वागादिकर्मेन्द्रियेष्वव्याप्तेश्च। न च वागादीनामिन्द्रियत्वे प्रमाणाभावः। 'वाक् करौ चरणौ' 'कर्मेन्द्रियाणि च' इत्यादेश्च। तेषामुपचरितार्थत्वकल्पने वैदिकाभासत्वं कल्पयितुः स्यात्।

किञ्चेदं साधनत्वमविलम्बेन कार्योत्पादकत्वं व्यापारवत्वं वा कर्तृप्रेर्यत्वं वा नाद्यः। कर्तृकर्मणोः प्रमातृप्रमेययोरतिव्याप्तेः। न च कर्तुः चक्षुरुन्मीलनव्यासङ्गवर्जमनःसंयोगविषयालोकसंयोगादिसहकार्यन्तराणां बहूनामपेक्षणीयानां सत्वेन, तेषां प्रकृतकार्यव्यवधायकत्वात्, विलम्बसम्भवेन, अविलम्बेन कार्योत्पादकत्वं नास्तीति वाच्यम्। चक्षुरादावप्युक्तसहकार्यपेक्षायाः साम्यात्। यद्यपि विषयसन्निकर्षः आलोकादिवच्चक्षुषोऽपेक्षणीयमस्ति। तथापि 'न हि स्वाङ्गं स्वव्यवधायकम्' इति न्यायेन

1 ०श्रयतादवस्थ्यात् – क.

सन्निकर्षादेर्व्यापारत्वेन न व्यवधायकत्वम्। मनःसंयोगादेस्तु आत्मनो व्यापारत्वाभावेन स्वाङ्गत्वाभावात् व्यवधायकत्वमिति वैषम्यमिति चेन्न। विषयालोकसंयोगस्य चक्षुषोऽपेक्षणीयस्य व्यापारत्वानङ्गीकारात्। आन्तरालिकस्योभयत्रसाम्याच्च।

न द्वितीयः। व्यापारत्वस्य दुर्निरूपत्वात्। कथञ्चिन्निरूपणीयत्वेऽपि तज्जन्यत्वे सति तज्जन्यजनकत्वम्, [1]आन्तरालिकत्वं वा तत्, नान्यत्। तदुभयं च मनःसंयोगादावतिव्याप्तम्। न तृतीयः। दार्वादौ[2] कर्मण्यतिव्याप्तेः।

## स्वमतरीत्या इन्द्रियसामान्यलक्षणम्

अत्रोच्यते। [3]क्रियाविशेषं प्रति कारकविशेषत्वम् इन्द्रियत्वम्। इदं च ज्ञानकर्मेन्द्रियोभयसाधारणम्। ज्ञानवचनक्रियादौ च धात्वर्थरूपक्रियात्वसद्भावात्।

एवं तर्हि छिदाया अपि धात्वर्थरूपक्रियात्वसद्भावात्[4] तत्करणे कुठारादावतिव्याप्तिः स्यादिति चेन्न। अनिन्द्रियजन्यक्रियाव्यावृत्तेन्द्रियजन्यक्रियानुगतधर्मविशिष्टस्यैव[5] क्रियाविशेष-

---

1 आन्तरालिकं - क.

2 दार्वादि -क.

3 स्वस्वविषयद्रवणशक्तिमत्त्वम् इन्द्रियलक्षणम् - इति मध्वसिद्धान्तसारे

4 सद्भावेन -क.

5 ०नुवृत्तधर्मविशेषवत्त्वस्य - क.

पदेन विवक्षितत्वात्। एवं कुठारादिव्यावृत्तेन्द्रियमात्रानुगतधर्मविशिष्टस्यैव[1] कारकविशेषपदेन विवक्षितत्वात्। एवमेव 'प्रमाकरणं प्रमाणम्' इत्यादौ क्रियाविशेषः कारकविशेषश्च विवक्षणीयः। अन्यथा तत्राप्युक्तरीत्या ईश्वरप्रमाया योगिप्रमायाश्च प्रमाशब्देन ग्रहणे तत्र चक्षुषः करणत्वाभावात्, प्रमात्रादेश्च करणशब्देन ग्रहणे प्रमाणत्वाभावाल्लक्षणमिदमनुपपन्नं[2] स्यादिति ईश्वरप्रमादिव्यावृत्तः[3] दोषजन्यभ्रमव्यावृत्तः क्रियाविशेषः[4] प्रमापदेन, दुष्टेन्द्रियप्रमात्रादिव्यावृत्तकारकविशेषः[5] करणपदेन विवक्षित इत्येव वक्तव्यम्। तस्मादुक्तमेवेन्द्रियसामान्यलक्षणमनवद्यम्।

## नैयायिकोक्तेन्द्रियलक्षणस्य दोषकथनम्

'शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्' इत्यन्यो मन्यते। स वैदिकाभास इत्युपेक्षणीयः। 'कर्मेन्द्रियाणि संयम्य'[6] 'बुद्धिर्मनः खानि

1 विशेषवत्त्वस्यैव - क.

2 प्रमाणसामान्यलक्षणमिदमनुपपन्नं - क.

3 व्यावृत्तः = भिन्नः

4 धर्मविशेषः -क

5 दुष्टेन्द्रियाप्रमाणादिव्यावृत्तधर्मविशेषः - कपाठः

6 भ.गी. ३-६

दश'[1] इत्यादिवैदिकवचनैर्वाक्पाणिपादादेरपीदीन्द्रियत्वावगमेन तत्राव्याप्तेः। स्वसङ्केतमात्रेण लक्षणकथनायोगाच्च। किञ्च, वक्रदण्डेतरदण्डानाश्रयो देवदत्त इत्युक्ते वक्रदण्डाश्रयत्वमादाय यथा पर्यवस्यति, तथा शब्दाश्रयत्वमादायेदं लक्षणं पर्यवस्यतीति चक्षुरादावव्याप्तिः शब्देतरपदवैयर्थ्यं च। तच्चाग्रे वक्ष्यते मन्मते तु वचनादिक्रियासाधनत्वाद् वागादौ लक्षणसमन्वयः। चक्षुरादौ च दर्शनादिरेव क्रियेति तत्साधनत्वाल्लक्षणसमन्वयः। मानसावलोकनलक्षणध्यानस्य ज्ञानरूपस्य 'क्रियामानसवत्'[2] इति सूत्रकृतैव क्रियारूपत्वमुक्तमिति न कश्चित् क्षुद्रोपद्रवः।

## विभागः

[3]इन्द्रियं पुनर्द्विविधम्। ज्ञानेन्द्रियं कर्मेन्द्रियं चेति। तत्र ज्ञानसाधनमिन्द्रियं ज्ञानेन्द्रियम्। तद् द्विविधम्। स्वरूपेन्द्रियं बाह्येन्द्रियं चेति। तत्राद्यं स्वरूपेन्द्रियं साक्षीत्युच्यते। आत्मभिन्नमिन्द्रियं बाह्येन्द्रियम्। तत्सप्तविधम्। बुद्धि-मनः-श्रोत्र-त्वक्-चक्षू-रसन-घ्राणभेदात्। कर्मसाधनमिन्द्रियं कर्मेन्द्रियम्। तत्पञ्चविधम्। वाक्-पाणि-पाद-पायु-उपस्थभेदात्।

---

1 तत्वसङ्ख्याने -९

2 ब्र.सू.३-३-४६

3 श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम्।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु – इति सूत्रभाष्ये

## स्वरूपेन्द्रियनिराकरणपरः पूर्वपक्षः

ननु अत्मस्वरूपस्य ज्ञानेन्द्रियत्वमयुक्तम्। तत्साध्यज्ञानस्वरूपस्यानिरूपणात्। तथा हि – किं तज्ज्ञानमात्मस्वरूपमुत ततोऽतिरिक्तम्। नाद्यः। आत्मनोऽनादिनित्यत्वेन तत्स्वरूपज्ञानस्य [1]साध्यत्वानुपपत्तेः। किञ्च ज्ञानस्य सविषयकत्वनैयत्येन किमात्मैव तद्विषयः, उतान्यत् किञ्चित्। नाद्यः। स्ववृत्तिविरोधात्। द्वितीये किं तदान्तरं सुखदुःखादि उत बाह्यं रूपादि। नाद्यः। सुखदुःखादेर्मानसत्वात्। अन्यथा मनोऽङ्गीकारवैयर्थ्यापत्तेः। न द्वितीयः। रूपादेश्चाक्षुषत्वात्। अन्यथा चक्षुराद्यङ्गीकारवैयर्थ्यापत्तेः। न द्वितीयः[2]। गौरवात्। उक्तरीत्या विषयाभावेन ज्ञानत्वानुपपत्तेश्च।

अस्तु वा आत्मविषयकमन्यविषयकं स्वरूपं बाह्यं वा यत्किञ्चिज्ज्ञानम्। तथाऽपि तत्कर्तुरात्मन इन्द्रियत्वानुपपत्तिः। क्रियायाः कर्तृजन्यत्वनैयत्येनान्यस्य तदयोगेनात्मन एव कर्तृत्वात्। न हि कर्तैव साधनमिति युज्यते। अनुभवस्यानुभाव्यसापेक्षत्वेन अन्यस्याभावादात्मैवानुभाव्यो वाच्यः। तथाचैकस्यैवात्मनोऽनुभवितृत्व-अनुभवसाधनत्व-[3]अनुभाव्यमानत्वा-

---

1 साध्यत्वायोगात् - क.

2 उत ततोऽतिरिक्तम् इति पक्षे

3 ०मानत्वादीनां - क.

नां विरुद्धानामङ्गीकारापत्तिश्च। चक्षुरादीनामिन्द्रियत्वे रूपाद्यसङ्कीर्णविषयदर्शनवदात्मन इन्द्रियत्वे तददर्शनाच्च।

अत्रैते प्रयोगाः – 'आत्मा न ज्ञानं, कर्तृत्वात् अक्रियात्वात् क्रियाश्रयत्वाच्च', 'ज्ञानं नात्मा, अज्ञातृत्वात् क्रियात्वात् क्रियानाश्रयत्वाच्च', 'आत्मा नेन्द्रियं कर्तृत्वात् कर्मत्वाच्च', 'इन्द्रियं नात्मा, ज्ञानसाधनत्वात्' इति। अत्र सर्वत्र विरुद्धत्रिकापत्तिः दृष्टविरोधश्चेति बाधकस्तर्कः[1]।

## निराकरणम्

अत्रोच्यते। अहमित्याकारकं ज्ञानमात्मस्वरूपम्। [2]तद्विषयम् आत्मस्वरूपभूतसाक्षीन्द्रियसाध्यं च। न च स्ववृत्तिविरोधः। प्रमेयत्वे प्रमेयत्ववदुपपत्तेः। न च नित्यत्वेन जन्यत्वानुपपत्तिः। प्रागनभिव्यक्तस्य सतोऽपि वस्तुनः कादाचित्काभिव्यक्तियोगेन जन्यत्वव्यवहारस्य कूपखनननाभिव्यक्तजलादौ कूपखननजन्यत्वव्यवहारस्येवोपपत्तेः। 'आत्मानमात्मना वेत्सि' 'मामहं जानामि'

---

1 एतेष्वनुमानेष्वप्रयोजकताशङ्काबाधकस्तर्क इति भावः।

2 तस्य विषयाः आत्मस्वरूपं तद्धर्माः अविद्या मनः तद्वृत्तयः
बाह्येन्द्रियज्ञानसुखाद्याः कालः अव्याकृताकाशश्चेत्याद्याः।
– इति प्रमाणपद्धतौ।

अतः सर्वे पदार्थाश्च सामान्यात् साक्षिगोचराः।
सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा ॥ – अनु. ३-२-१

इत्यबाधितप्रत्ययेन करणत्वकर्मत्वकर्तृत्वादीनां मिथो भेदस्यौत्सर्गिकत्वेऽपि बाधोपपत्तेः। अन्यथोत्सर्गापवादौ क्वापि न स्याताम्।

सुखादिविषयकम् अहं सुखी दुःखीच्छाप्रयत्नज्ञानादिमानित्याकारकं ज्ञानं वा साक्षिसाध्यमस्तु। न च मनसैव तज्ज्ञानोपपत्तिः। जाग्रत्स्वप्नयोः कथञ्चित् तत्साध्यत्वशङ्कावकाशेऽपि सर्वेन्द्रियोपरमावस्थायां सुषुप्तौ तदनवकाशात्। न ह्युपरते मनसि तत्कार्यं शङ्कार्हम्।

न च सुषुप्तौ सुखादिज्ञानमेव नास्तीति वाच्यम्। एतावन्तं कालं सुखमहमस्वाप्समित्याद्युत्तरकालीनायाः स्मृतेः सुषुप्त्युत्थानक्षणाव्यवहितोत्तरक्षण एवोत्पन्नाया अनुपपत्तेः। न हि पूर्वानुभवं विना स्मृतिरुत्पद्यते। तस्याः संस्कारजन्यत्वनियमात्। तस्य चानुभवजन्यत्वनियमात्। अनुभवश्च अन्यस्य[1] असम्भवात् सुषुप्तिकालीन एव। किं बहुना। सुषुप्तः[2] करप्रसारणादिसमये कुड्याद्यवष्टम्भे तदन्यदेशे करं प्रसारयति। न हि तदन्यदेशस्याज्ञाने आकाशात्मकप्रदेशे करं प्रसारयेत्। अतः सुषुप्तौ [3]अव्याकृताकाशरूपप्रदेशविशेषोऽनुभूयते। एवं कालः सुषुप्त्य-

1 अन्यदा - क

2 सुषुप्तौ - क; "सुषुप्त्युत्थितः" इति पाठः सम्भाव्यते।

3 जातिबधिराणामपि आकाशप्रतीतेः नागमोऽपि तत्र प्रमाणमिति साक्षिसिद्धमेव गगनं - न्या.सु. १-४-६

वस्थाऽज्ञानं[1] च सुषुप्तावनुभूयते। एतावन्तं कालं सुखमहमस्वाप्सम्, न किञ्चिदवेदिषमित्युत्तरकालीनानुस्मरणात्। ज्ञानतद्धर्मप्रामाण्यादीनां चान्यवेद्यत्व अनवस्थापातात् साक्षिवेद्यत्वम्।

ननु सुखस्य मनःपरिणामरूपत्वेन तदुपरतिसमये सुषुप्तौ कथमुत्पत्तिः। न ह्युपादानं विना उपादेयमुत्पत्तुमर्हति। न ह्यनुत्पन्नं सुखं साक्षिग्राह्यम्। साक्षिणोऽप्रामाण्यप्रसङ्गात्। तेन सुषुप्तौ न सुखं नापि तज्ज्ञानम् - इति चेत्। सत्यम्। मनःपरिणामसुखस्याभावेऽपि स्वरूपसुखमस्त्येव। तत् साक्षिग्राह्यम्। नन्वेवं जाग्रदादावपि सर्वस्मिन् काले साक्षिणा सुखप्रत्ययापत्तिः। ज्ञातृज्ञेयज्ञापकानां चैतन्यात्मकत्वेन सर्वदा सत्वादिति चेत्। घटव्यञ्जकालोकाभावेनान्धकारे घटाद्युपलब्ध्यभाववत् जाग्रदवस्थायां स्वरूपसुखाभिव्यञ्जकप्राज्ञमूर्तिसंयोगस्याभावेन तदा स्वरूपसुखोपलब्ध्यभाव उपपद्यते।

अस्तु तर्हि स्वरूपसुखमेव साक्षिवेद्यम्। न वृत्तिरूपं सुखम्। तन्मनोवेद्यमस्त्विति चेत्। सुषुप्तौ सुखादिप्रतीत्यन्यथानुपपत्त्या चैतन्यस्येन्द्रियत्वे सिद्धे साक्षित्वेन स्वरूपसुखत्वेन ग्राह्यग्राहकभावे कल्पनीये 'यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्सामान्ययोरपि' इति न्यायेन साक्षित्वेनान्तरपदार्थत्वेन

---

सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् - अनु. १-४-६

1 कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः - अनु.व्या. १-४-६

ग्राह्यग्राहकभावः कल्प्यते। न च सुखादिज्ञानस्य मनोन्वय-व्यतिरेकानुविधानविरोधः। सुखाद्युत्पत्याऽन्यथासिद्धत्वात्। मनो हि सुखाद्युपादानकारणम्। न ह्युपादानं विनोपादेयमुत्पत्तुमर्हतीति तदन्वयव्यतिरेकानुविधानं सुखाद्युत्पत्तेरेव मनःकार्यतां प्रापयति। न तु तज्ज्ञप्तेरपि। गौरवात्।

तथाच इन्द्रियान्तरानपेक्षप्रतीतिकत्वं (साक्षात्) साक्षि-ग्राह्यतावच्छेदकत्वम्। यथा महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं चक्षुर्ग्राह्यतावच्छेदकं तथा। गोलकं चास्य [1]'हृदि ह्येष आत्मा' इति श्रुतेर्हृदयम्। यथा चक्षुषः अक्षिगोळकम्। प्राज्ञमूर्तिसंयोगादिः सहकारी, यथा चक्षुषो दीपालोकसौरालोकादिः। एवमिन्द्रिया-न्तरसाम्येऽपि साक्षिणोऽनिन्द्रियत्वाभ्युपगमः कर्तृत्वकर्मत्वादीनां भेदभ्रमनिबन्धनः[2]।

न च मनोङ्गीकारवैय्यर्थ्यम्। सुखादीनामुपादानसिद्ध्यर्थत्वात्। न च तस्येन्द्रियत्वानुपपत्तिः, उक्तरीत्या सुखादिज्ञानसाधनत्वाभावेन ज्ञानेन्द्रियत्वायोगादिति वाच्यम्। स्मृतिरूपज्ञानं प्रति तस्य हेतुत्वोपपत्तेः। एतच्चाग्रे स्पष्टयिष्यते।

अत एव आत्मा न ज्ञानमित्यादिप्रयोगा विपक्षे बाधकाभावेन निरस्ताः। आत्मानमात्मना वेत्सीत्यबाधितप्रत्ययबलेन कर्तृत्व-

1 षट्प्रश्नोपनिषदि – ३-६

2 सामानाधिकरण्याभावभ्रमनिबन्धन इति यावत्।

कर्मत्वादेरैकाधिकरण्यप्रतीतेरेकस्यैव कर्तृत्वकर्मत्वाद्यापादनतर्कस्याभासत्वात्। तस्मात् साक्षिण इन्द्रियत्वं सिद्धम्। तस्य च [(1)]चित्स्वरूपत्वात् नोत्पत्तिर्न विनाशश्च।

### बुद्ध्यादीनामुत्पत्तिः

बुद्ध्यादीन्द्रियाणि तु, अहङ्कारतत्वजन्यत्वादुत्पादविनाशवन्ति। तथा हि - अहङ्कारस्त्रिविधः। [(2)]वैकारिकतैजसतामसभेदात्। बुद्धिमनःपरमाणुभ्यां सह वैकारिकभागौ बुद्धिमनसी श्रोत्रादिपरमाणुभिः सह तैजसभागाः श्रोत्रादिपञ्चेन्द्रियाणि उत्पादयन्ति। 'स्पर्शान्तर्भावतः कर्मखानां' इत्यादिना वागादीन्द्रियाणां त्वगिन्द्रियान्तर्भावोक्तेः। वागादिपरमाणुभिः सह तैजसभागा वागादिपञ्चेन्द्रियाण्युत्पादयन्ति - इति।

## इन्द्रियविवेके बुद्धिविवेकः

तत्रादौ बुद्धिर्निरूप्यते। निश्चयरूपज्ञानसाधनं बुद्धिः[(3)]। नच चक्षुरादेः अयं घट इत्याद्यनुभवरूपनिश्चयं प्रति मनसश्च स देवदत्त इत्यादिस्मृतिरूपनिश्चयं प्रति हेतुत्वात् तत्रातिव्याप्तिः। निश्चयत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्य

---

1 नित्यत्वात् –क.

2 महत्तत्वाद् विकुर्वाणादहंतत्वमजायत।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ - भागवते तृतीयस्कन्धे

3 बुद्धिर्ज्ञानम्। सर्वव्यवहारहेतुर्गुणः - इति पदार्थसङ्ग्रहे।

[1]विवक्षणात्। चक्षुरादौ तदभावात्। नहि तत्र निश्चयत्वेन चक्षुरादित्वेन कार्यकारणभावः[2]। अनुमित्यादिरूपनिश्चयं प्रति चक्षुरादेः कारणत्वाभावात्। बुद्धौ तु निश्चयत्वावच्छिन्ननिश्चय-सामान्यं प्रति कारणताऽस्त्येव। बुद्धित्वेन निश्चयत्वेन कार्यकारणभावेऽतिप्रसङ्गाभावात्। तथाच, चक्षुष्ट्वेन चाक्षुष-निश्चयत्वेन श्रोत्रत्वेन [3]श्रावणनिश्चयत्वेन मनस्त्वेन स्मृतिरूप-निश्चयत्वेन इत्यादिरूपेणैव तत्र तत्र कार्यकारणभाव इति न निश्चयत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं चक्षुरादावस्तीति नातिप्रसङ्गः।

न च बुद्धिसूक्ष्मभागस्य प्रकृतेर्निश्चय[4]साधनताभावेनाव्याप्तिः। निश्चयरूपफलोपाधानाभावेऽपि तत्स्वरूपयोग्यतायाः सहजशक्तेः सद्भावेन तत्रापि तत्साधनत्वोपपत्तेः। अनुमतं चैतदन्येषामपि। अन्यथा कोमलदण्डस्याकारणत्वापत्त्या दण्डत्वस्य कारणताति-रिक्तवृत्तितयाऽवच्छेदकत्वं न स्यात्। सहजशक्तिसद्भावे कार्या-नुत्पादः कथमिति चेत्। सूक्ष्मभागस्य तदोपचयविशेषाभावादिति गृहाण। उपचित एव हि भागो दृढो भवति। नहि कोमलदण्डो

---

1 विवक्षितत्वात् - क.

2 कार्यकारणभावः शक्यनिरूपणः - क.

3 श्रावणनिश्चयत्वेनैव इत्यादि तत्तत्कार्यकारणभावनियम इति - क.

4 साधनत्वाभावादव्याप्तिः - क.

दार्ढ्याभावात् कार्यमजनयन् तज्जननशक्तिविधुरो भवति। शक्ते-रागन्तुकत्वप्रसङ्गात्। एवमधस्तादुपरिष्टाच्च शङ्का परिहारश्चाव-सेयः।

न च बुद्धेरिन्द्रियत्वे चक्षुरादेरिव प्रत्यासत्त्या गोलकेन च भवितव्यमिति वाच्यम्। बुद्धेर्विमर्शः प्रत्यासत्तिः। 'आत्मनाड्यां तथा बुद्धिः तत्रस्थश्चबृहस्पतिः'[1] इति वचनेनात्मनाड्येव गोलकमिति वक्ष्यमाणत्वात् - इति **बुद्धिविवेकः**।

## इन्द्रियविवेके मनोविवेकः

### लक्षणम्

स्मरणसाधनं [2]मनः। स्मरणं च 'अमुमर्थं स्मरामि' इत्यनुभवसिद्धम्। तत्साधनत्वं च मनसोऽन्वयव्यतिरेकानुविधाने-नानुमेयम्। तत्र स्मरणपदेन कुठारादिव्यावृत्तिः। साधनपदेना-सम्भवव्यावृत्तिः। [3]असाधारणकारणपरेण साधनपदेन काला-दृष्टादिनिमित्तकारणव्यावृत्तिः।

नन्वथापीदं लक्षणमसम्भवि। मनसोऽन्तरिन्द्रियत्वेनान्तर-पदार्थग्रहणसामर्थ्येऽपि गङ्गादिबहिरर्थग्रहणसामर्थ्याभावादिति

1 भागवते तृतीयस्कन्धे

2 वैकारिकाहङ्कारोपादानकं मनस्तत्वम् - इति पदार्थसङ्ग्रहे

3 असाधारणकारणत्वरूपसाधनत्वघटकासाधारणत्वेन कालादृष्टादिसाधा-रणकारणव्यावृत्तिः - क.

चेत्। सत्यम्। मनोऽन्तरिन्द्रियत्वादान्तरपदार्थग्रहणे स्वाभाविकशक्तिमदपि पूर्वानुभवजनितसंस्काररूपसहकारिसामर्थ्येन बाह्यार्थग्रहणशक्त्याविर्भावात्। यथा वर्तमानार्थग्रहणे स्वाभाविकशक्तिमदपि चक्षुः संस्काररूपसहकारिसामर्थ्येन सोऽयं देवदत्त इत्यतीतार्थग्राहकशक्त्याविर्भाववत्। अन्यथा घटज्ञानवानहमित्यनुव्यवसाये व्यवहितस्य बाह्यार्थस्य घटादेः मनसा[1] ग्रहणं न स्यात्। तत्र प्रत्यासत्तिसामर्थ्याद् बाह्यार्थग्रहणमुपपन्नं चेदिहापि संस्काररूपसहकारिसामर्थ्येन तदुपपन्नमस्तु।

नन्वनुभवसंस्कारस्मृतीनां समानाधिकरणानां समानविषयाणामेव कार्यकारणभावः। अन्यथा देवदत्ते घटानुभवेन यज्ञदत्ते संस्कारोत्पत्तिः, तन्निष्ठेन संस्कारेण डित्थे स्मृत्युत्पत्तिश्च स्यात्। तथा देवदत्ते घटानुभवेन तत्रैव पटविषयिकसंस्कारः कुड्यविषयिकस्मृतिश्च स्यात्। तथाच गङ्गादिरूपबाह्यार्थविषयिकानुभवेन गङ्गादिविषयिकसंस्कारोत्पत्तिः, तद्विषयिकस्मृत्युत्पत्तिश्च एकस्मिन् प्राप्नोति। इयं गङ्गेति पूर्वानुभवे इदन्ताविशिष्टगङ्गास्वरूपस्योल्लिखितत्वेन तद्विषय एव संस्कारः स्मृतिश्च स्यात्। न तु तत्ताविषयिणी। तस्या अनुभवाविषयत्वात् तज्जन्यसंस्कारा-

1 नैयायिकैरनुव्यवसायस्य मानसत्वाङ्गीकारेण मनसस्तत्र घटादिबाह्यार्थग्राहकत्वमभ्युपेयम्। यदि तत्र व्यवसायरूपप्रत्यासत्तिसामर्थ्यादङ्गीक्रियते तर्हि संस्काररूपसहकारिसामर्थ्येन तदुपपन्नमस्त्विति भावः।

विषयत्वाच्चेति चोद्यमुक्तरीत्या सहकारिसामर्थ्यात् शक्त्यन्तराविर्भावस्य वेत्रबीजादौ दर्शनेन चेहापि संस्काररूपप्रत्यासत्तिसामर्थ्येन शक्त्यन्तराविर्भावेन पूर्वाननुभूततत्ताग्रहणं युक्तमिति दत्तोत्तरम् । समानविषयाणामेव कार्यकारणभाव इति नियमश्चौत्सर्गिकः ।

## स्मृतिलक्षणम्

ननु किमिदं स्मृतित्वम्, यदाश्रयसाधनं मनः । किं ज्ञानजन्यज्ञानत्वम्, अनित्यविशिष्टज्ञानजन्यज्ञानत्वम्[1], स्वसमानविषयकानित्यविशिष्टज्ञानजन्यज्ञानत्वम्, स्वसमानविषयकस्वसमानाधिकरणत्वेनानित्यज्ञानविशेषणेनैतदेव वा ।

नाद्यः । अनुभवस्येश्वरज्ञानजन्यत्वेनातिव्याप्तेः । न द्वितीयः । 'दण्डी' इति विशिष्टानुभवस्यानित्यदण्डज्ञानरूपविशेषणज्ञानजन्यत्वेनातिव्याप्तेः । न तृतीयः । अनुमितिरूपलिङ्गिविशिष्टानुभवे लिङ्गविशिष्टप्रत्यक्षजन्यत्वेनातिव्याप्तेः । न चतुर्थः । घटमानयेति वाक्यश्रवणात् श्रोतरि शाब्दबोधो जायते । स च वाक्यप्रयोगजन्यः । वाक्यप्रयोगस्तु अर्थं बुद्ध्वा वाक्यरचनेति न्यायेन वक्तृनिष्ठज्ञानजन्येति तावत् प्रसिद्धम् । तथाच श्रोतृगतघटकर्मकानयनक्रियाकसंसर्गधीसमानविषयकवक्तृनिष्ठविशिष्टज्ञानेन शब्द-

---

1 अनित्यज्ञानजन्यज्ञानत्वम्

प्रयोगद्वारा जन्ये श्रोतृगतशाब्दविशिष्टानुभवेऽतिव्याप्तिः। स्मरणस्य तत्तावगाहित्वेन अनुभवाधिकविषयत्वेन स्वसमानविषयकज्ञानजन्यत्वासम्भवश्च। अत एव न पञ्चमः[1]। देवदत्तसमवेते पूर्वानुभवसमानविषयके सोऽयं देवदत्त इत्यादिरूपे [2]प्रत्यभिज्ञानेऽतिव्याप्तेश्च।

अत्रोच्यते– [3]संस्कारमात्ररूपावान्तरव्यापारजन्यत्वं स्मृतित्वम्। 'दण्डी' इत्यादिविशिष्टानुभवे विशेषणज्ञानादेर्व्यापारत्वेऽपि संस्कारस्य तदभावात्। प्रत्यभिज्ञायां तत्तांशे संस्कारस्य व्यापारत्वेऽपीदमंशे तदतिरिक्तस्य विषयेन्द्रियसंयोगादेर्व्यापारत्वान्नातिप्रसङ्गः।

## स्मृतिप्रामाण्यसमर्थनम्

अत्र केचित् स्मृतेः प्रामाण्ये विप्रतिपद्यन्ते। ते प्रष्टव्याः। किं क्लृप्तप्रमाणाभावात् स्मृतेः प्रामाण्यानभ्युपगमः, अनुमानाद्यजन्यत्वेऽपि[4] असन्निकृष्टार्थग्राहित्वाद्वा, असदर्थोल्लेखित्वाद्वा, वृद्धव्यवहाराभावाद्वा, प्रवृत्तिविसंवादाद्वा।

---

1 इदं वाक्यं सम्पातायातमिति भाति।

2 संस्कारसन्निकर्षाभ्यां जायमानं ज्ञानं प्रत्यभिज्ञा।

3 मनोजन्या स्मृतिः। संस्कारस्तु मनसः तदर्थसन्निकर्षरूप एव–

इति प्रमाणपद्धतौ

4 ०त्वे सति -क.

नाद्यः। सुखादिप्रमायां करणत्वेन क्लृप्तस्य [1]मनसः स्मृतिकरणत्वकल्पनात्। न च मनसो बहिरस्वातन्त्र्यान्नैवमिति वाच्यम्। अत एव हि संस्कारः प्रत्यासत्तिः कल्प्यते। अत एव न द्वितीयः। संस्कारस्य प्रत्यासत्तित्वेनासन्निकृष्टार्थग्राहित्वासिद्धेः। न तृतीयः। असिद्धेः। [2]स्मृतिर्हि तत्र तत्तांशं तदासीदित्युल्लिखति। न च तत्तांशस्तत्र तदा नासीदिति। अत एव न चतुर्थः। [3]अस्मदीयवृद्धैः स्मृतेः प्रमाणत्वेन व्यवहारात्। नापि पञ्चमः। न हि स्मृत्वा[4] कमप्यर्थं ततः प्रवृत्तो न लभत इति शक्यते वक्तुम्। तदेवं स्मृतिः प्रमाणं तत्साधनं च मन इति सिद्धम्।

तत्तु बाह्येन्द्रियाधिष्ठानेनैव बाह्यज्ञानमात्रे कारणम्। न तु स्वातन्त्र्येण। स्मृतिं प्रति तु स्वातन्त्र्येणैव कारणमिति विवेकः।

* * * *

---

1 मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकम् - अनु. २-१-२-५९

2 यतो ज्ञानकाले वस्तुनः तथात्वं याथार्थ्योपयुक्तं न भवति। किन्तु यद्देशकाल-सम्बन्धितया यद्वस्तु ज्ञानेन यादृशं गृह्यते तद्देशकालयोः तस्य तथात्वम् – इति प्रमाणपद्धतौ

3 स्मृतिः प्रत्यक्षमैतिह्यं अनुमानश्चतुष्टयम्।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः॥ इति श्रुतेश्च – इति प्रमाणलक्षणे

4 सुखदुःखादिकं किञ्चित् स्मृतावपि हि दृश्यते - अनु. २-१-२

## मनसो लक्षणान्तरम्

यद्वा, वासनोपादानत्वं मनसो लक्षणम्। [1]वासना नाम अनुभवनिमित्तकः संस्कारविशेषः। स च मन उपादानीकृत्य जायत इति लक्षणसमन्वयः। एतेन मनसि विप्रतिपद्यमाना वादिनो निरस्ताः।

## वासनासमर्थनम्

अस्ति तावत् स्मृतिः। तथाहि – अद्यजातशिशोस्तावत् स्तन्यपानादौ प्रवृत्तिरनुभवसिद्धा। सा च प्रवृत्तित्वादिष्टसाधनताज्ञानसाध्या। तच्चेदानीमनुभवकारणाभावेन नानुभवरूपम्। किन्तु स्मृतिरूपं तद्वाच्यम्।

किञ्चास्ति तावद् देहापत्यकलत्रादौ शोभनत्वारोपरूपो बन्धः। स चानुभवरूप इदानीं बन्धकः। श्रुतशास्त्रस्य श्रवणादिजनिताशोभनत्वानुभवे विशेषदर्शने जाग्रति शोभनत्वानुभवरूपभ्रमायोगात्। न च पीतः शङ्ख इत्यादिवद् विशेषदर्शनाप्रतिबध्यभ्रमो भविष्यतीति वाच्यम्। तस्यैव पुंसः शास्त्रे पटुतरमभ्यस्यमाने शोभनत्वभ्रमनिवृत्तिदर्शनात्। अतः अनादिकालागततत्तदनुभवजनितशोभनत्वस्मृतिरूप एव बन्धो वाच्यः। स्मृतिश्च बहुकालानुवृत्ततया प्रबलेति नेदानीं सकृज्जातानुभवेन प्रतिबध्यत इति त्यक्तलज्जैरनुमन्तव्यम्। अत एव गीतायामपि

1 वासनाः = भावनापरनामकाः संस्कारविशेषाः - न्या.सु. ३-२-१

[1]'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः' इत्युक्तम्। अत एव प्रबलतरेण पूर्वजन्मन्येतज्जन्मनि वा बहुवारं शास्त्राभ्यासोद्बलितसंस्कारेण वा तज्जन्यस्मृत्या वा तत्सहितानुभवेन वा बहुश्रुतस्य विषयेषु शोभनत्वारोपनिवृत्तिरपि शोभनत्वाशोभनत्वस्मृत्योरेकजातीयत्वेऽपि सद्वासनादुर्वासनोपोद्बलितत्वतदभावाभ्यां विहगान्तरत्वतदभावाभ्यां श्येनयोरिव परस्परबाध्यबाधकभावः सिद्धः। तथाचैवं प्रमाणद्वयेन स्मृतौ सिद्धायां तदुपादानत्वेन [2]वासनासिद्धिः। किञ्च स्वाप्नाः पदार्थाः सत्या एव। तेषामुपादानगवेषणेऽन्यस्याभावाद् वासना सिद्ध्यति।

## अद्वैतमतरीत्या स्वाप्नस्य मिथ्यात्ववर्णनम्

अत्र केचिदान्तरवेदविद्वेषिणो ब्रुवन्ते। स्वाप्नस्य गजादेः केवलाविद्याविलसितत्वेन शुक्तिरूप्यादेरिव वस्तुत्वमेव दूरोत्सारितम्। तथा हि – स्वाप्ना न सत्याः। निमित्तोपादानदेशकालादृष्टादिसम्पत्त्यभावात्। कार्यस्य वस्तुनो हि निमित्तं कर्ता कालादृष्टादि च। न तावदत्र कर्तृसम्पत्तिरस्ति। कर्ता जीव ईश्वरो वा नाद्यः। तस्य स्वप्नावस्थायामज्ञानावृतत्वेनोपादानगोचरापरोक्षज्ञानाद्यसम्भवात्। न द्वितीयः। तत्स्वरूपस्यैवाभावाद्भावे वा

---

1 गीता ६-४४

2 स्मृतिं प्रति मनसः करणत्वेनोपादानत्वासम्भवात् उपादानस्य चावश्यकत्वेन वासनाया एवोपादानत्वोक्तौ तात्पर्यमिति भाति।

युगपत् स्वाप्नसर्वपदार्थसृष्टिः स्यात्। अत एव कालादृष्टादिकं न निमित्तकारणम्। नाप्युपादानकारणसम्पत्तिः। स्वाप्नगजादेः घटादेरुपादानस्य मृदादेरिव गजाद्युत्पत्तेः पूर्वं पश्चाच्चादर्शनात्। वासनानामकं किञ्चिदलौकिकमुपादानं भविष्यतीति चेन्न। वासनास्वरूपस्याभावात्। भावे वा सर्वदा स्वाप्नगजादिसृष्टिप्रसङ्गः।

नापि तेषामुत्पत्तिदेशो घटादीनां भूतलमिव निर्वक्तुं शक्यः। न तावद् देहाद् बहिर्देशः। देहान्तरावस्थितेनोपरतकरणेन जीवेन तद्दर्शनासम्भवात्। पार्श्वस्थेनान्येन जीवेनोपलम्भप्रसङ्गाच्च। नाप्यन्तः सूक्ष्मं कण्ठस्थानम्। स्थूलतमस्य गजादेरल्पे सूक्ष्मे कण्ठदेश उत्पत्त्यसम्भवात्। हृदयविदारणादिप्रसङ्गाच्च। नापि तेषामुत्पत्तिकालो निर्वक्तुं शक्यः। न तावद् वसन्तकालस्तेषाम्। हेमन्ते सुप्तस्य वसन्तादिदर्शनाभावप्रसङ्गात्। न हि हेमन्ते वसन्तकालस्योत्पत्तिः। एवं ग्रीष्मादिकालोऽपि निराकरणीयः। नापि तेषां द्रष्टा निर्वक्तुं शक्यः। न तावदीश्वरो द्रष्टा। गजादिदर्शनेन भयकम्पादिदर्शनविरोधात्। नापि जीवः। उपरतकरणत्वात्। अत एव न तज्ज्ञानसम्पत्तिः। न तावच्चक्षुरादिबाह्येन्द्रियेण गजादिप्रतीतिः। उपरतत्वात्। नापि मनसा। गजादिबाह्यार्थग्रहणे सामर्थ्याभावात्।

तदेवं दुर्घटत्वात् स्वाप्नगजादेर्न सत्यत्वं किन्तु मायिकत्वमेव।

न च मायिकत्वेऽप्युक्तरीत्या दुर्घटत्वमाशङ्कनीयम्। दुर्घटत्वस्य मायिकत्वानुकूलत्वात्। तदुक्तम् –

दुर्घटत्वं तु मिथ्यात्वे भूषणं न तु दूषणम्।
कथञ्चिद्धटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥ इति।

**स्वमतरीत्या स्वाप्नसत्यत्वसमर्थनम्**

अत्रोच्यते – स्वाप्नगजादेरीश्वरः कालादृष्टादिकं च निमित्तम्। न च तदसिद्धिः। 'स हि सर्वस्य कर्ता' इत्यादि(1)श्रुतेः। न च युगपत् सर्वस्वाप्नसृष्टिप्रसङ्गः। कालादृष्टादिसहकार्यन्तराभावात्। कालादेश्च स्वत एव विशेषवत्त्वात्। स चेश्वरो(2) विचित्रशक्तित्वात् स्वत एव विशेषवतः कालादीन् निमित्तीकृत्य क्रमेण विद्युदादीनि (इव) स्वाप्नगजादीन् क्षिप्रमुत्पादयति क्षिप्रं विनाशयति चेति न सर्वदोपलब्धिः। उपादानं च तेषां वासनैव। न च तदभावः शङ्कनीयः। स्मृत्यादिलिङ्गेन तत्सद्भावस्य प्रागेव साधितत्वात्।

अत एव पूर्वं पश्चाच्च तदवयवानामुपलम्भप्रसङ्गो निरस्तः।

---

1 "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण। एतस्माद्ध्येव पुत्रो जायते। न तत्र रथा न रथयोगा न पन्थानो भवन्ति"

– इति न्यायसुधाम् ३-२-१

2 संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत्।
स्वप्नकाले दर्शयति ....        – अनु. ३-२-१
'जीवाय' इति शेषः। – न्या.सु.

घटाद्यवयवानां मृदादीनामिव स्थूलत्वाभावात्। न हि वासनामय-गजाद्यवयवाः स्थूलाः। वासनायाः अतिसूक्ष्मत्वात्, देहान्तः कण्ठप्रदेश एव उत्पत्तिस्थानम्। वासनामयानां तेषां सूक्ष्मत्वान्नोत्पत्त्यसम्भवः। न वा हृदयविदारणादिप्रसङ्गः। न वा पार्श्वस्थानामुपलम्भप्रसङ्गः। यस्मिन् काले यो जीवः स्वाप्नान् पश्यति स एव कालः तेषामुत्पत्तिकालः। न च स्वाप्नसृष्टवसन्तकालस्य हेमन्तकाले उत्पत्त्यसम्भवः शङ्कनीयः। [1]प्राकृतत्वाप्राकृतत्वाभ्यामविरोधात्। न हि प्राकृते हेमन्तकाले वासनामयस्य वसन्तकालस्योत्पत्तौ बाधकमस्ति। द्रष्टा चैषां जीव एव। बाह्यकरणानामुपरतत्वेऽपि अन्तःकरणस्य मनसस्तदभावान्न किञ्चिद् दुर्घटम्। अत एव ज्ञानसम्पत्तिरपि सुघटा। मनसः प्राकृतबाह्यार्थग्रहणसामर्थ्याभावेऽपि अन्तःसृष्टवासनामयगजादिग्रहणे सामर्थ्यसम्भावात्।

तस्मात् सत्या एव स्वाप्नाः। तेषां चोपादानं वासनैवेति वासना सिद्ध्यति। तस्याश्चोपादानं मन एव प्रसिद्धमिति वासनोपादानत्वलक्षणस्य लक्ष्ये मनसि समन्वयः।

### नैयायिकोक्तमनोलक्षणनिराकरणम्

अन्ये तु – सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च

1 बाह्यत्वाबाह्यत्वाभ्यामविरोधादिति तात्पर्यमिति भाति। तदनुसारेणोत्तरवाक्येपि प्राकृत इत्यस्य बाह्य इत्येवार्थः स्यात्। विमर्शनीयोऽयं विषयः।

मनोयुक्तात्मनि सुखादेः समवेतत्वेन संयुक्तसमवायसम्बन्धेन मनसा अहं सुखी, दुःखीत्यादिप्रत्ययोत्पत्तेर्घटनीयमित्याहुः। तन्न। सुखदुःखादेर्मनःपरिणतत्वेनात्मसमवेतत्वाभावात्। समवायस्य वक्ष्यमाणरीत्या निराकरणाच्च। सः देवदत्त इत्यादिस्मृतिजनने मनसः संस्कारस्य प्रत्यासत्तित्वेन क्लृप्ततया संयुक्तसमवायस्य तदयोगाच्च। इहापि संस्कारस्य प्रत्यासत्तित्वे अहं सुखीत्याद्यनुभवस्य स्मृतित्वं च स्यात्। संस्कारजन्यज्ञानस्य स्मृतित्वनियमात्। अनुभवत्वानुपपत्तिश्च।

केन तर्हि अहं सुखी दुःखीत्यादि प्रत्यय इति चेत्। साक्षिणेति[1] ब्रूमः।तत्स्वरूपगोलकप्रत्यासत्तिग्राह्यतावच्छेदकादेः साक्षिविवेके सप्रपञ्चनिरूपितत्वात् न कश्चित् क्षुद्रोपद्रवः।

**विभागः**

तदपि मनः नित्यानित्यभेदेन द्विविधम्। शेषं पूर्ववत्। इति **मनोविवेकः।**

## इन्द्रियविवेके श्रोत्रविवेकः

**लक्षणम्**

शब्दोपलब्धिसाधनं श्रोत्रम्। शब्दो द्विविधः। वर्णात्मकः ध्वन्यात्मकश्चेति। तत्राद्योऽनादिर्नित्यः। द्वितीयः सादिरनित्यः।

1 चक्षुरादेरान्तरपदार्थग्रहणे सामर्थ्याभावात्। मनसश्चोक्तरीत्या प्रत्यासत्त्याभावादि चेत्। – खपाठः

सोऽपि द्विविधः । द्रव्यात्मको गुणात्मकश्चेति[1] । तत्र द्रव्यात्मकः शब्दतन्मात्रासञ्ज्ञितः, आकाशस्योपादानम् । तस्य द्रव्यत्वं [2]तार्किकप्रक्रियानिराकरणप्रकरणे बहुभिः प्रमाणैः साधयिष्यते । [3]द्वितीयस्तु आकाशोपादानकः । विमतः शब्दो गुणः अनुपादानत्वादिति तस्य गुणत्वसिद्धिः । आकाशद्वैविध्यं श्रोत्रस्याकाशात्मकत्वं चाग्रे वक्ष्यते। तथाच वर्णात्मकः शब्दोऽव्याकृताकाशाश्रितः । शब्दतन्मात्रात्मकः शब्दो गुणात्मकशब्दश्च भूता -काशाश्रितः ।

---

1 द्रव्यात्मको ध्वनिरूपशब्द एवं द्रव्यात्मकस्पर्शरूपरसगन्धाङ्गीक्रियन्ते। यतो हि प्रळयप्रकरणेषु वारिणा हृतगन्धाभूःसलिलत्वाय कल्पते (भाग-११-३-१३,१४,१९) इत्यादिरूपेण गन्धस्य भुवि लयः, रसस्य सलिले, रूपस्य तेजसीत्यादिक्रमो निरूप्यते। तथैव 'भूमिर्गन्धे प्रलीयते' 'अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे। लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते। रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे। अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु' (भाग. ११-२४-२२,२३,२४) इति पृथिव्या गन्धे, सलिलस्य रसे, ज्योतिषो रूपे, वायो स्पर्शे, आकाशस्य शब्दे च लयो निरूप्यते। उभयान्यथानुपपत्त्या द्रव्यात्मकाः शब्दादयो गुणात्मकाश्च शब्दादयोऽङ्गीकार्याः। शब्दादयो भूततन्मात्रा इत्युच्यन्ते। तन्मात्राश्च भूतसूक्ष्माणीति प्रसिद्धम्। अत एव ताः तत्तन्महाभूतारम्भकाः। अतः स्वस्वयोनिषु भूतानां लयो युक्तिसहः। तन्मात्राणां शब्दादीनां द्रव्यत्वाभावे केवलं गुणत्वे कथं गुणे द्रव्यस्य लयः स्यात्। अतः साधूक्तं ध्वन्यात्मकः शब्दो द्रव्यात्मकोऽपीति।

2 भौतिकप्रक्रियायां कारणप्रकरणे - क

3 द्वितीयो गुणात्मकः - क

एवं त्रिविधेषु शब्देषु मध्ये वर्णात्मको गुणात्मकश्च श्रोत्रेण गृह्यते। तद्ग्रहणप्रकारश्चाग्रे वक्ष्यते। मात्राख्यशब्दस्तु वाय्वादिवदतीन्द्रियः। तद्ग्राह्यतावच्छेदकस्योद्भूतशब्दत्वादेरभावात्। कथं तर्हि तज्ज्ञानमिति चेदुक्तागमैरेव ग्रहणमिति ब्रूमः[1]।

तथाच श्रोत्रेन्द्रियं व्यङ्ग्यव्यञ्जकभावमापन्नमुभयविधशब्दं गृह्णाति। महत्त्वसमानाधिकरणोद्भूतशब्दत्वं तद्ग्राह्यतावच्छेदकम्। प्रत्यक्षताप्रयोजकधर्मविशेषो महत्त्वम्। प्रत्यक्षग्रहणयोग्यत्वं जातिविशेषो वा उद्भूतत्वम्। तदुभयं च [2]फलबलकल्प्यम्। आकाशीयपरमाणुगतशब्दव्युदासाय महत्त्वे सतीति विशेषणम्। श्रोत्रेन्द्रियगतशब्दस्य मात्रागतशब्दस्य च व्युदासाय उद्भूतत्त्वविशेषणम्।

### श्रोत्रस्याकाशीयत्वसमर्थनम्

[3]श्रोत्रमाकाशीयम्। अधिकाकाशभागवत्त्वात्।

ननु तैजसाहङ्कारजन्यमिन्द्रियं तन्मात्राभिः तामसाहङ्कारैश्च सहितं भूतकारणमिति प्रागुक्तम्। तेन [4]तैजसाहङ्कारभागस्य कार्येषु करणं व्याप्तमिति न्यायेन स्वकार्येऽनुस्यूतिसम्भवेन तस्य

1 ०गमैरेवेति ब्रूमः।

2 फलबलात् कल्प्यम् -क

3 भूताकाशमेव श्रोत्रम्। तद्गुण एव ध्वनिः – वि.त.नि. टीकायां

4 श्रोत्रेन्द्रिय – इति मूलकोशे

श्रोत्रात्मकत्वसम्भवेऽपि आकाशस्य श्रोत्रकारणत्वाभावेन तत्र तद्भागप्रसक्त्यभावे तद्भागाधिक्यस्य सुतरामभावेन कथं तेन श्रोत्रस्याकाशीयत्वानुमानमिति चेत्। सत्यम्। सूक्ष्माणामिन्द्रियादीनामयं सृष्टिक्रमः। तथापि सूक्ष्मरूपेण भूतकारणानामप्युपचयाधिक्यसिद्धये भूतकार्यत्वमप्यस्ति। [1]'तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति वचनात्। भौतिकैर्दध्याज्यादिभिरिन्द्रियपुष्ट्यनुभवाच्च। तथाच कार्ये कारणभागसद्भावात् तदाधिक्यं च श्रोत्रे सम्भवतीति किमनुपपन्नम्। एवमग्रेऽपि।

## इन्द्रियविवेके त्वगादिविवेकः

स्पर्शोपलब्धिसाधनं त्वक्। रूपोपलब्धिसाधनं चक्षुः। रसोपलब्धिसाधनं रसनम्। गन्धोपलब्धिसाधनं घ्राणम्। महत्त्वसमानाधिकरणोद्भूतस्पर्शसामान्यगुणतदाश्रयद्रव्यान्यतरत्वं महत्त्वसमानाधिकरणोद्भूतरूपसामान्यगुणतदाश्रयद्रव्यान्यतरत्वं महत्त्वसमानाधिकरणोद्भूतरसत्वं महत्त्वसमानाधिकरणोद्भूतगन्धत्वं चेत्येतानि क्रमात् त्वगादिग्राह्यतावच्छेदकानि। तेषु च महत्त्वविशेषणेन वाय्वादिपरमाणुगतस्पर्शादिव्यावृत्तिः। उद्भूतविशेषणेन त्वगादीन्द्रियगतव्यावृत्तिः।

नन्वथापि पाषाणे गन्धोपलब्धिः कुतो न स्यात्। न च तत्र

1 नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः।
तेषां भूतैरुपचयः सृष्टिकाले विधीयते – ब्र.सू.भा.

गन्ध एव नास्तीति वाच्यम्। पाषाणभस्मनि गन्धाभावप्रसङ्गात्। तस्य ह्युपादानं पाषाणावयव एव। 'यो यध्वंसजन्यः स तदुपादानोपादकः यथा दध्यादिः' इति नियमात्। तद्यदि तत्र पाषाणावयवे गन्धो न स्यात्। तर्हि तद्भस्मन्यपि गन्धो न स्यात्। एवं तस्मिन् गन्धे सिद्धे [1]कारणगुणानां स्वकार्ये [2]गुणारम्भकत्वनियमेन पाषाणेऽपि गन्धसिद्धिः। उच्यते। उद्भूतपदेनैव तद्व्यावृत्तिः। त्वगादीनां वाय्वाद्यात्मकत्वं तत्तद्भागाधिक्येनोक्तरीत्याऽनुमेयम्। वचनक्रियासाधनं वागिन्द्रियम्। आदानक्रियासाधनं पाणिरित्यादि। प्रमाणं चात्र वाक्च वक्तव्यं च चक्षुश्च द्रष्टव्यं चेत्याद्यागमः।

तदेवमिन्द्रियाणि साक्षिणा सह त्रयोदश। 'द्वादशविधा वा इमे प्राणाः' इत्यादि तु अस्वरूपेन्द्रियविषयम्। इति **इन्द्रियविवेकः।**

## मात्राविवेकः

### लक्षणम्

इन्द्रियोपादेयं मात्रा[3]। तथाहि – शब्दादिभिः पञ्चतन्मात्रापरमाणुभिः पञ्चविधैः सह परमाणुभिः श्रोत्रेन्द्रियादिभागाः क्रमेण

1 कार्यगुणानां - क.

2 गुण्यारम्भ - क.

3 'परमाणवः श्रोत्रेन्द्रियभागाः' – इति पाठः सम्भाव्यते

शब्दतन्मात्राद्याख्यानि पञ्चद्रव्याणि जनयन्ति। अथवा साक्षाद् भूतोपादानं मात्रा।

**विभागः**

तत् पञ्चविधम्। शब्द-स्पर्श-रूप-रस-गन्धभेदात्। अमी शब्दादय उक्तरीत्या द्रव्यात्मकाः। शब्दतन्मात्रादिसञ्ज्ञा-मात्रत्वात्। [1]तस्येन्द्रियस्य भूतस्य वा मात्रा विषयः तन्मात्रा। शब्दश्चासौ तन्मात्रा च शब्दतन्मात्रेति निर्वचनसम्भवात्।

एवं भूतमपि वक्ष्यमाणरीत्याऽऽकाशवाय्वादिभेदेन पञ्च-विधम्।

**तत्वानां क्रमेणोपादानत्वविवेचनम्**

तथाच शब्दादितन्मात्रानामाकाशीयादिपरमाणुभिः सहा-काशाद्युपादानत्वमुद्देशक्रमप्रस्तावे प्राक् सूचितमिदानीं विविच्यते।

[2]अहङ्कारतत्वं वैकारिक-तैजस-तामसभेदेन त्रिविधम्। वैकारिकतैजसाभ्यां बुद्ध्यादेः श्रोत्रादेश्चेन्द्रियस्योत्पत्तिरुक्ता। तत्र तामसाहङ्कारश्रोत्रेन्द्रियभागाभ्यां सहकृतः शब्दतन्मात्राशब्दितः शब्दभागः आकाशीयपरमाणुभिः सह भूताकाशात्मना, तामसा-

1 शब्दतन्मात्रादिशब्दाभिधेयाश्च। न च कल्पनागौरवम्। उक्तप्रमाणप्रमितानां शब्दतन्मात्रादिसञ्ज्ञामात्रत्वात् - इत्यधिकः कपाठे।

2 महत्तत्वाद्विकुर्वाणादहंतत्वमजायत।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा॥ – भागवते

हङ्कारत्वगिन्द्रियभागाभ्यां सहकृतः स्पर्शतन्मात्राशब्दितः स्पर्शभागो वायवीयपरमाणुभिश्च सह वाय्वात्मना, तामसाहङ्कारचक्षुरिन्द्रियभागाभ्यां सहकृतो रूपतन्मात्राशब्दितो रूपभागः तैजसपरमाणुभिश्च सह तेजआत्मना, तामसाहङ्काररसनेन्द्रियभागाभ्यां सहकृतो रसतन्मात्राशब्दितो रसभागो जलीयपरमाणुभिश्च सह जलात्मना, तामसाहङ्कारघ्राणेन्द्रियभागाभ्यां सहकृतो गन्धतन्मात्राशब्दितो गन्धभागः पार्थिवपरमाणुभिश्च सह पृथिव्यात्मना परिणमते ।

नन्वेवमहङ्कारतत्वादेस्तामसभागादिद्वारा भूतोपादानत्वं प्राप्तमिति तत्रातिव्याप्तिरिति चेन्न । साक्षाद्भूतोपादानत्वं शब्दादेरेव प्राधान्येन । इतरेषां तु सहभावमात्रं न प्राधान्यमिति । श्रुतिस्मृतीतिहासपुराणाद्यैरुक्तयुक्तिभिश्च तथैवावगमात् । एवमाकाशोपादानत्वं शब्दतन्मात्राया विशेषलक्षणम् । वायूपादानत्वं स्पर्शतन्मात्राया इत्याद्यूह्यम् ।

**उपादानविभागः**

अथ मात्राणां भूतोपादानत्वं नाम तदात्मना परिणामः[1] । स च द्विविधः । समस्तपरिणामः एकदेशपरिणामश्चेति । समस्तपरिणामोऽपि द्विविधः । स्वरूपप्रच्युत्या तदप्रच्युत्या चेति । तत्रा

1 पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभवः ।
क्षीरादिवद् विकारः स्यात् ............ अनु- १-४-६

-द्यो यथा क्षीरस्य दध्यात्मना परिणामः। तत्र ह्युपादानभूतक्षीरस्वरूपस्यातञ्चनादिना[1] प्रच्युत्या क्षीरावयवानामेव समस्तानां दध्यात्मना परिणामः। दध्नि क्षीरार्थिप्रवृत्तिव्यवहाराद्यभावेन क्षीरस्वरूपनाशावगमात्। अन्यथा क्षीरस्य स्वावयववृत्तित्वे दध्नोऽप्युत्पन्नस्य तद्वृत्तित्वावश्यम्भावेन युगपन्मूर्तद्वयसमावेशो विरुद्ध आपद्येत। 'यो यद्ध्वंसजन्यः स तदुपादानोपादेयः' इति व्याप्तेः। क्षीरावयवोपादानकत्वस्य दध्नो निश्चयसम्भवात् क्षीरतदवयवोरत्यन्तभेदस्याभावेन क्षीरपरिणामवादश्च सङ्गतः।

द्वितीयो यथा सुवर्णस्य कुण्डलात्मना परिणामः। तत्र हि यावानुपादानभागः तावानपि सुवर्णस्वरूपानाशेनैव कुण्डलात्मना परिणमते। न हि पुनः क्षीरस्येवात्र स्वरूपनाशः। हिरण्यार्थिप्रवृत्तिव्यवहारादिदर्शनात्। अयं चापरो विशेषः। स्वर्णकारेण तस्यैव सुवर्णीकर्तुं शक्यत्वात् कुण्डलात्मना परिणामो निवर्त्यपरिणामः। दध्यात्मना परिणामस्तु अनिवर्त्यपरिणामः। नह्युपायसहस्रेणापि दधि क्षीरीकर्तुं शक्यते।

एकदेशपरिणामो यथा देवदत्तस्य यज्ञदत्तात्मना परिणामः। यत्र पितापुत्रभावः तत्र हि न चेतनयोः कार्यकारणभावः। 'अजो नित्यः शाश्वतः'[2] इति वचनविरोधात्। किन्तु पितृशरीर-

1 आतञ्चनं प्रतीवापजवनाप्यायनेषु च इति मेदिनी। "हेप्पु" इति भाषायाम्।
2 भ.गी. २-२०

पुत्रशरीरयोरेव। तत्रापि न पितृशरीरं समस्तं प्रच्युतस्वरूपमप्रच्युतस्वरूपं वा क्षीरहिरण्यादिवत् पुत्रशरीरात्मना परिणमते। पितृशरीराद् विविक्ततया पुत्रशरीरोपलम्भात्। अपि तर्हि पितृशरीराधिष्ठितचेतनभुक्तान्नादिरसपरिणतशरीरावयवचरमधातुविशेष[1] एव पुत्रशरीरात्मना परिणमते।

अत्र यद्यपि अन्नपानादिना शरीरोपचये अपूर्वस्योत्पत्तिः। विशेषणभेदाद् विशिष्टभेदस्यावश्यकत्वात्। यतश्च क्षणभङ्गुरत्वमागमोऽपि श्रावयति। तत एव तद्विशेषाऽपगमे तद्विशिष्टनाशोऽपि युक्तः। तथाच देवदत्ताद् यज्ञदत्तो जायत इति पञ्चम्यनुपपत्तिः। तथाऽपि क्रियाविशेषादवयवसंयोगनाशेन विशिष्टस्य विनाशे तदवयवसमूहमात्रावशेषे सति तत्रैकोऽवयवः चरमधात्वाख्यः तस्माद् विश्लिष्य पुत्रशरीरात्मना परिणमते। शेषास्त्ववयवाः पुत्रशरीरप्रकृतय उच्यन्ते। पुत्रशरीरोपादानावयवसंश्लिष्टभागवत्वात्। ते च संहत्य शरीरमपूर्वमारभन्ते। अत एव पञ्चमी। 'जनिकर्तुः प्रकृतिः'[2] इति सूत्रात्। अत एव चैतत्सूत्रे वृत्तिकारैरुदाहृतम् – शृङ्गाच्छरो जायते' 'गोमयाद् वृश्चिको जायते' 'अविलोमभ्यो दूर्वा जायन्ते' इत्यादि जायमानोपादानसंसृष्टत्वात् शृङ्गादेर्जनिकर्तुः प्रकृतित्वोपपत्तिरिति।

---

1 चेतनत्वात्तदन्नं हि कार्यरूपतया भवेत् – अनु १-४-६

2 अष्टाध्यायी १.४.३०

एतेन जायमानोपादानं जनिकर्तुः प्रकृतिशब्दार्थ इति वदन्तो निरस्ताः। न हि तत्र शृङ्गादीनामेव समस्तानां शराद्युपादानत्वम्। उपादेयाद् विविक्ततया दर्शनविरोधात्। 'हिरण्यात् कुण्डलं जायते' 'क्षीराद् दधि जायते' इतिवत् पञ्चम्यापत्तेश्च। न चैवं ध्रुवत्वप्राप्तौ[1] गतार्थता। तद्विवरणार्थं पुनरारम्भात्। यथा चैतत् तथाऽऽकर[2] एव स्फुटम्। अयमपि अनिवर्त्यपरिणाम एव। न हि पुत्रादिरन्यात्मनोपायसहस्रेण कुण्डलादिरिव परिणामयितुं शक्यते। तथाच मात्राणां भूतोपादानत्वं किमिवावगन्तव्यमिति चेत्। शृङ्गगोमयादीनां शराद्युपादानत्वमिव, पितृशरीरादेः पुत्र-शरीराद्युपादानत्वमिव चावगन्तव्यम्। अत एव कार्यविनाशे तदुपादानस्य स्वसंसृष्टभागसमूहे संश्लेषलक्षणः कारणे लय-श्चोक्तः। एवमधस्तादुपरिष्टाच्च [3]विवेक्तव्यम्। इति **मात्रा-विवेकः**।

## भूतविवेकः

भूतत्वं जातिविशेषः। तदधिकरणं पञ्चविधम्। आकाश-वायु-तेजो-जल-पृथिवीभेदात्।

---

1 ध्रुवमपायेऽपादानमिति सूत्रेणैव ध्रुवत्वेन पञ्चम्युपपत्तौ जनिकर्तुः प्रकृतिरिति सूत्रं गतार्थमिति भावः।

2 सुधायां प्रकृत्यधिकरणे

3 अवगन्तव्यम् - क.

## आकाशविवेकः

शब्दगुणकत्वमाकाशस्य लक्षणम् । शब्दाख्यगुणवत्त्वमिति यावत् । आकाशो द्विविधः । [1]अव्याकृताकाशो भूताकाशश्चेति । तत्राद्योऽ[2]नादिर्नित्यः । 'अनादिर्वाऽयमाकाशः' 'आकाशवत् सर्वगतश्च नित्यः' इत्यादेः प्रलयेऽपि तत्सद्भावावगमाच्च । परम-महांश्चेति वक्ष्यते । द्वितीयस्तु तद्विपरीतः । 'आत्मन आकाशः सम्भूतः'[3] 'आकाशो नीलिमोदेति'[4] इत्यादेः । प्रलये तस्य लयावगमाच्च । शरीरोपादानत्वेन विकारित्वाच्च । तथाच द्वितीय एवात्र लक्ष्यम् । शब्दश्चोक्तरीत्या त्रिविधः । ततश्चाद्येऽतिव्याप्ति-वारणाय गुणपदम् । भेरीदण्डसंयोगादिजन्यगुणात्मकशब्दस्य भेर्याद्यवच्छिन्नाकाशोपादानकत्वेन तद्वृत्तित्वाद्भूताकाशलक्षणसम-न्वयः । प्रपञ्चस्तूत्तरत्र भविष्यति ।

### विभागः

स द्विविधः पूर्ववत् । स पुनस्त्रिविधः । शरीरेन्द्रियविषयभेदात् ।

---

1 सृष्टिप्रलययोर्विकारशून्या दिगव्याकृताकाशम् – पदार्थसङ्ग्रहे ।

2 अव्याकृतं हि गगनं साक्षिगोचरम् ।
प्रदेश इति विज्ञेयो नित्यं नोत्पद्यते हि तत् – अनु.

3 तैत्तिरीयोपनिषदि - १-३

4 आकाशो नीलिमोदेति न प्रदेशः कथञ्चन ।
तामसो भूतसूक्ष्माणि यतः खं लिङ्गमात्मनः ।।
– न्यायविवरणोदाहृतपैङ्गिश्रुतिः २-३-१

भोगायतनं शरीरम्। ज्ञानभोगादिसाधनमिन्द्रियम्। उपभोग्यो विषयः। तच्छरीरमन्तरिक्षलोकनिवासिनाम्[1]। इन्द्रियं शब्द-ग्राहकं श्रोत्रम्। तस्याकाशात्मकत्वमुक्तं श्रोत्रविवेके। विषयः शरीरान्तःपरिणामहेतुः[2]। **इत्याकाशविवेकः ॥**

## वायुविवेकः

अरूपित्वे सति स्पर्शगुणवत्त्वं वायोर्लक्षणम्। अत्र यद्यपि वायोरुपादानं [3]स्पर्शमात्रा द्रव्यमेव, न गुण इति सिद्धान्ते लक्षणासम्भवः। तथापि शब्दवत् स्पर्शोऽपि द्विविधोऽस्ति। द्रव्यं गुणश्चेति। ततश्च पूर्ववदेव लक्षणसमन्वयः। स्पर्शवत्त्वमात्रे कृते स्पर्शतन्मात्राश्रये तत्परमाण्वादावतिव्याप्तिः। तद्वारणाय गुण-पदम्। तेजआदिद्रव्यत्रयवारणाय[4] सत्यन्तम्। 'वायौ रूपं नास्ति' इति प्रतीते रूपशून्यो वायुः। अत एव न प्रत्यक्षः। किन्तु स्पर्शानुमेयः। तथाहि – योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शः त्वगिन्द्रियेणोपलभ्यते सः क्वचिदाश्रितः गुणत्वात्। न च आकाशस्तदाश्रयः। स्पर्शवत्परमाणुजन्यत्वाभावात्। नापि

---

1 आकाशशरीरत्वमन्तरिक्षलोकनिवासिनाम् इति यावत्।

2 'शरीरपरिणामहेतुः' - इति पाठः सम्भाव्यते।

3 स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च सङ्ग्रहः। – तृतीयस्कन्धे
नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः। – द्वितीयस्कन्धे

4 आदिद्रव्येतिव्याप्ति - क.

तेजोजले। विपरीतस्पर्शवत्वात्। यद्यपि पृथिव्या अनुष्णाशीत-स्पर्शोऽस्ति। तथापि रूपासमानाधिकरणस्पर्शस्य तद्गुणत्वानुपपत्तिः। तस्मात् तदाश्रयो वायुरित्यनुमीयते।

ननु - विमतः स्पर्शः न त्वगिन्द्रियप्रत्यक्षः अतीन्द्रिय-गुणत्वात् परमाणुरूपवत्। न चाप्रयोजको हेतुः। वायुः त्वगि-न्द्रियसन्निकर्षशून्यः, अतीन्द्रियत्वादिति वायोः सन्निकर्षाभावे सिद्धे, तद्गुण इन्द्रियसन्निकर्षशून्यः असन्निकृष्टधर्मत्वादिति स्पर्शे सन्निकर्षाभावे सिद्धे, इन्द्रियसन्निकर्षरूपप्रत्यक्षकारणा- भावेना-कारणकार्योत्पत्तिप्रसङ्गादिति - चेत्। उच्यते। आकाशादेरती-न्द्रियत्वेऽपि इन्द्रियसन्निकर्षसद्भावेनाद्यमनुमानं व्यभिचारि। न चेन्द्रियसन्निकर्ष एव तत्र नास्तीति वाच्यम्। सन्निकर्षाभावेनै-वाकाशादेः अप्रत्यक्षत्वोपपत्तौ[1] प्रत्यक्षताप्रयोजकमहत्त्वसमानाधि-करणोद्भूतरूपत्वादिप्रत्यक्षत्वप्रयोजकधर्मनिरुक्तौ रूपादिपद-वैय्यर्थ्यापत्तेः। गृहान्तरवर्तिदीपप्रभायां गवाक्षादिना बहिर्निर्गतायां चक्षुःसन्निकर्षदर्शनेन तत्र द्वितीयानुमानमपि व्यभिचरितम्। ततश्च विपक्षे बाधकाभावेनाप्रत्यक्षत्वसाधको हेतुरप्रयोजकः। आकाशगुणे शब्दे व्यभिचरितश्च। तस्मात् साधूक्तम् - 'वायुः स्पर्शानुमेयः' इति।

उक्तं च वायोः स्पर्शानुमेयत्वम् - 'अचेतनः स्पर्शगम्यो

1 अप्रत्यक्षत्वापत्तौ - क.

योऽयमेनं जनार्दनः'[1] 'स्पर्शगम्यः स्पर्शानुमेयः अरूपिद्रव्यत्वेन बाह्यप्रत्यक्षागोचरत्वस्य स्थितत्वात्' इति काठकभाष्यटीकायाम् ।

**विभागः**

स चायं वायुर्द्विविधः पूर्ववत् । पुनस्त्रिविधः । शरीरेन्द्रिय-विषयभेदात् । शरीरं प्रेतादीनाम् । इन्द्रियं सर्वशरीरव्यापी त्वक् । विषयः चेष्टादिहेतुः शरीरान्तर्बहिश्च वर्तते । तत्र शरीरस्थो वायु-र्दशविधः । प्राण- अपान- व्यान- उदान- समान- नाग- कूर्म- कृकल- देवदत्त- धनञ्जयभेदात् । तेषां च लक्षणानि शास्त्रे द्रष्टव्यानि ।[2] इति **वायुविवेकः** ।

## तेजआदिभूतत्रयविवेकः

'रसरहितं रूपवत् तेजः', 'गन्धरहितं रसवज्जलम्', 'गन्धवती पृथिवी' इति तेजआदिद्रव्यत्रयलक्षणम् ।(*)

---

1 काठकोपनिषद्भाष्ये २-२-१०

2 अन्ये तु स एकोप्युपाधिभेदात् प्राणापानादिसञ्ज्ञां लभत इत्याहुः । उपाधिभेदकारणत्वायोगात् दशत्वस्य प्रमाणसिद्धतया अल्पसङ्ख्याया अयोगाच्च । अतो अल्पमतयो न जानन्ति ।। इति वायुविवेकः ।। (खपाठः)

(*) (रक्तत्वं तेजसो लक्षणम् । प्रदीपादौ तेजसि रक्तवर्णसद्भावात् लक्षणसमन्वयः । नच पृथिव्यादौ रक्तपक्ष्यादिकेतिव्याप्तिः । क्षत्त्ररक्ताभि-सम्बन्धाद् रक्तेति । न च तत्प्रतीतेः औपाधिकत्वम् । नच सौरालोकादौ तेजसि रक्तरूपाप्रतीतेरव्याप्तिः । पुञ्जीरान्तर्वर्ति जले रसान्तरप्रतीतिवदत्रापि

अत्राद्ये लक्षणे रसरहिते इत्यनेन जलपृथिव्योः व्यावृत्तिः। रूपपदेन वाय्वाकाशयोः व्यावृत्तिः। द्वितीयलक्षणे गन्धरहितेत्यनेन पृथिवीव्यावृत्तिः। रसवत् इत्यनेन तेजोवाय्वाकाशानां व्यावृत्तिः।

---

रूपान्तरप्रतीतेरौपाधिकत्वात्। अन्यथा शुक्लभास्वररूपस्य तेजसो गुणत्वं वर्णयता तैजसत्वेन त्वदभिमते सुवर्णादावव्याप्तिः कथं परिहरणीया। एतेन सुवर्णेऽव्याप्तिरपि परास्ता। लक्ष्यत्वाभावात्। यथा चैतत् तथा वक्ष्यते पृथिवी-विवेके। उष्णस्पर्शवत्त्वं वा तेजसोलक्षणम्। न चक्षुषस्तैजसत्वेन तत्राव्याप्तिः। द्रव्यान्तरप्रतिपत्तिनिमित्तेनौष्णस्य चानुपलम्भेपि तत्सद्भावेन लक्षणसमन्वयात्।

तद्विविधं पूर्ववत्। तत्तु पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। शरीरं सूर्य(स्वर्ग)लोकादिवासिनाम्। तस्य तैजसत्वमधिकतेजोभागित्वेनानुमेयम्। तत्र तेजोभागाधिक्यं च पार्थिवानां शरीराणामर्धेन पृथिवी स्मृतावित्यादिवचनेन तेजसोर्धत्वात्। इतरयोर्भागयो अर्धवदिति द्रष्टव्यम्। इन्द्रियं चक्षुः।

ननु सूर्या(स्वर्गा)दिलोकनिवासिनां तैजसदेहे तेजोभागस्याधिक्येन तदन्तर्गतस्य चक्षुषस्तैजसत्वेप्यस्मदादिपार्थिवशरीरान्तर्गतस्य चक्षुषस्तदभावात् कथं तैजसत्वम्। मैवम्। अधिकतेजोभागिजातीयत्वस्य हेतुत्वोपपत्तेः। स्वस्मिन्नपि स्वजातीयत्वसम्भवात्। अतो न तैजसशरीरान्तर्गतचक्षुषि तैजसत्वा(?) सिद्धिः। यद्वा अस्मदादिशरीरान्तर्गतस्यापि चक्षुषः तेजोजलपृथिव्यात्मकत्वेन तेषु चक्षुषि तेजोभागस्य, घ्राणे पृथिवीभागस्येव, रसने जलभागस्येव चाधिक्योपपत्तिः। यद्वा चक्षुः तैजसं तेजोदेवताभिमन्यमानत्वात् यो यद्देवता-भिमन्यमानः स तदीयः। यथाकाशदेवताभिमन्यमानं श्रोत्रमाकाशीयम्। हेतुश्च 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदि'त्यादि श्रुत्यादिना सिद्धः। एवमुपरिष्टा-

यद्वा रक्तशुक्लनीलरूपवत्वं त्रयाणां क्रमेण लक्षणम्। नन्वत्र आद्यलक्षणस्य पार्थिवे रक्तपद्मादौ जलात्मके रुधिरादौ च, द्वितीयलक्षणस्य तेजसि सौरालोकादौ पार्थिवे पटादौ च, यामुनजलादौ दीपज्वालायां चातिव्याप्तिः। (एवम् आद्यलक्षणस्य

---

दधस्ताच्चानुसन्धेयम्। विषयस्त्रिविधः। भौमदिव्यौदर्यभेदात्। भौमं पृथिव्यां वह्न्यादिकम्। द्वितीयं विद्युदादि, तृतीयमौदर्यम्। यद्यपि समुद्रे बाडवोप्यस्ति तथापि समुद्रस्य भूम्यन्तर्गतेः भौमेन्तर्भवति। अन्यस्तु सुवर्णादीनां तैजसत्वमाश्रित्याकरजं चतुर्थमाह। यच्च चक्षुस्तैजसं स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपप्रभावत् इति। तन्न। मरतकादीनां स्वर्णन्यायेन पार्थिवत्वात्। इति तेजोविवेकः।

शुक्लरूपवत्त्वमपां लक्षणम्। अत एव यमुनाजलादावाश्रयोपि(?) विशेषेण(?) समीपे नील्यप्रतीतावपि दूरे शौक्ल्यप्रतीतिरुपपन्ना। नच भास्वरशुक्ले तेजसि प्रसङ्गः। 'रक्तोग्निरुदकं शुक्लः कृष्णैव पृथिवी स्वतः' इति वचनेन शुक्लरूपस्य जल एव रक्तरूपस्य तेजस्येव व्यवस्थाया सिद्धेः तेजसि शौक्ल्याभावात्। रक्तत्वाप्रतीतिस्तु तत्र आश्रयाद्यौपाधिकी। नच शुक्लपटादौ प्रसङ्गः। उदक-बहुत्वतः शुक्लत्वमित्येव वर्णान्तरगतिर्भवेदितिवचनेन स्वतः शुक्लत्वाभावात्। तेजोभागापेक्षया उदकबहुत्ववर्णनान्न विरोधः। एतेन तेजस्यतिव्याप्तिवारणाय भास्वरविशेषणं दत्तम्। प्रथमक्षणावच्छिन्नजले रूपं नास्ति। विनष्टजलेऽपि निर्गुणत्वसिद्धान्तेन शीतस्पर्शाद्यभावादित्यव्याप्तिमाशङ्क्य शीतस्पर्शसमाना-धिकरणद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षितमित्यन्यः। स वैदिकाभासः। गुणगुणिनोरभेदस्य प्रमाणसिद्धत्वेनागुणसिद्धान्तस्य दुःसिद्धान्तत्वात्। कथं तर्हि द्रव्यगुणेत्यादि विभागः। भेदस्याप्यङ्गीकारात्। यथा चैतत् तथाग्रे वक्ष्यते। माधुर्यं शीतस्पर्शवत्त्वं वा जलस्य लक्षणम्। ननु मधुदध्यादौ पार्थिवे

तैजसे सौरालोकादौ सुवर्णादौ च। द्वितीयलक्षणस्य यामुनजलादौ रुधिरादौ च।) तृतीयलक्षणस्य रक्तमृत्तिकादौ(1) चातिव्याप्तिः

1 श्वेतमृत्तिकादौ - क.

मधुररसवत्वादतिव्याप्तिः। रसान्तरानधिकरणत्वे सति मधुरत्वस्य विवक्षितत्वात्। दध्यादौ चाम्लादिरससद्भावेन न प्रसङ्गः। ननु जम्भीरान्तवर्तिजले समुद्रजले च रसान्तरसद्भावादव्याप्तिः। मैवम्। रसान्तरप्रतीतेराश्रयाद्यौपाधिकत्वेन स्वतो रसान्तरनधिकरणत्वात्।

एतेन शीतस्पर्शवत्त्वस्य पार्थिवचन्दनादावव्याप्तिरपास्ता। तदन्तवर्तिजलगतशीतस्पर्शवत्त्वस्यैव तत्र प्रतीतिरित्यङ्गीकारात्। एतेनोष्णजलेऽव्याप्तिरपि समाहिता। सांसिद्धकद्रवत्वं वा जलस्य लक्षणम्। नचास्य तैले पार्थिवेतिप्रसक्तिः। तादृशद्रवत्वस्य तिलाश्रितजलनिष्ठत्वेन अदोषात् सर्वत्र पार्थिवजलभागसद्भावेपि अस्य सहकारिविशेषेण सांसिद्धिकद्रवत्वाधिकरणपार्थिवद्रव्योत्पादकत्वस्य वेतृबीजादिवदुपपत्तेः। नित्यानित्याश्चेति पूर्ववद्विविधाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके तत्र दिव्यशरीरे जलभागस्यार्धत्वात्; इतरयोः पृथिवीतेजसोरर्धत्वात्। जलभागाधिक्येन जलीयत्वोपपत्तेः। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्तीत्यन्यः। स च अग्रसम्बन्धं विनापि तन्मूलादिप्रदेशे मध्वादिसम्बन्धे रसज्ञानं न स्यादित्युपेक्षणीयः। किन्तु गोळकव्याप्यवृत्तित्वमत्वमेव न्याय्यम्। अधिकजलभागवत्वादित्यादि पूर्ववत्। विषयस्तु सरित्समुद्रकरकादिः। करकायास्तु द्रवत्वमदृष्ट- विशेषप्रतिबद्धमिति सांसिद्धिकद्रवत्वस्य न तत्राव्याप्तिरिति सर्वमवदातम्। इति जलविवेकः ॥

तत्र गन्धवती पृथिवी। तत्र पार्थिवत्वेनाभिमतास्मदादिशरीरादिषु गन्धोपलब्धेर्लक्षणसमन्वयः। ननु जलेपि गन्धोपलब्धेः गन्धवत्त्वस्य तत्रातिव्याप्तिरिति

स्यात्। सत्यमेवमेषां धर्माणां परस्परसाङ्कर्यम्। तथाऽपि स्वाभाविकत्वविशेषणेनोक्तदोषद्वयपरिहारः। न च नियामकाभावः। 'रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः' इत्याद्यागमेनैव नियमनात्।

---

चेत्। अत्र वक्तव्यम् – किं सूक्ष्मे जलेतिव्याप्तिराशङ्क्यत उत बाह्योतान्तरे। नाद्यद्वितीयौ तत्र गन्धोपलब्धेरस्यासिद्धेः। गन्धमात्रामुपादानीकृत्य उत्पन्नपिण्डविशेषे गन्धस्य गुणस्य सहैव जननाङ्गीकारेण सूक्ष्मस्य तथात्वाभावेन तत्र गन्धवत्त्वायोगः। तृतीये लोशरादि(?) संसृष्टे उत जले (?)। नाद्यः। जपाकुसमसन्निधानात् स्फटिके लौहित्यमिव गन्धो लोशरादिसम्पर्कात् प्रतीयमानोपि न दोषावहः। द्वितीये तु न प्रतीयत एव। यदि वा प्रतीयते तत्रापि तदाश्रयभूम्याद्यौपाधिकीति साक्षात्सम्बन्धेन गन्धवत्त्वस्येह विवक्षितत्वात्। तेन न कश्चित् क्षुद्रोपद्रवः।

नच जगदाधारे काले ईश्वरेवाऽतिप्रसङ्गः। साक्षात्पदेनैव निराससम्भवात्। जगदाधारत्वप्रयोजकसम्बन्धेन तयोर्गन्धसत्वेऽपि संयोगादिना तदभावात्। नन्वेवमपि सूक्ष्मबाह्ययोः गन्धमात्रामुपादानीकृत्य अनुत्पन्नत्वेन गन्धाभावादव्याप्तिरिति चेन्न। गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अस्ति चेदं तयोरपि स्थूले गन्धसमानाधिकरणद्रव्यत्वव्याप्यपृथिवीत्वजातिसद्भावात्। जातिमत्त्वस्य कर्मण्यतिप्रसक्ततया द्रव्यत्वव्याप्येति विशेषणम्। तावत्युक्तौ जलत्वमादाय जलेतिप्रसक्तिः। अतो गन्धसमानाधिकरणेति जातिविशेषणं, जलत्वं तु न गन्धसमानाधिकरणं, कस्मिंश्चिदपि जले गन्धाभावादिति जलादौ नातिप्रसङ्गः। अतो द्रव्यत्वव्याप्येति सम्मतं चैतत्। आद्यक्षणावच्छिन्नद्रव्यस्य निर्गुणत्वमाश्रित्यापि गन्धवती

मधुररसवत्त्वं शीतस्पर्शवत्त्वं सांसिद्धिकद्रवत्ववत्त्वं वा जलस्य लक्षणम्। अत्रापि पूर्ववत् मधुजम्बीरादौ अतिव्याप्त्यव्याप्ती आशङ्क्य स्वाभाविकत्वविशेषणेन परिहरणीये(1)।

---

1 रक्तोग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः। नाभिपद्माभिसम्बन्धात् पीता सेत्यभिधीयते। क्षत्ररक्ताभिसम्बन्धाद् रक्तोदकबहुत्वतः। शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत्। विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते। स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः। – सूत्रभाष्यम् (२-३-१२) (contd)

---

पृथिवी शीतस्पर्शवति आप इति लक्षणं ब्रुवतामन्येषामपि कथमन्यथा गन्धवत्त्वस्य आद्यक्षणावच्छिन्नघटादौ नाव्याप्तिरिति उपरिष्टादधस्ताच्च प्रत्येतव्यम्।

नीलरूपवत्त्वं पृथिवीलक्षणम्। न च शुक्लपटादावव्याप्तिः। 'विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते' इत्यादिना रूपान्तराश्रयौपाधिकत्वस्योक्तत्वेन तत्र तदभावात्। क्वचित् शौक्ल्यस्य स्वाभाविकत्वोक्तिस्तु यावद्द्रव्यभावित्वाभिप्राया। सा नित्या अनित्या चेति पूर्ववत्। सा पुनस्त्रिविधा। शरीरेन्द्रियविषयभेदात्। तत्र सुखदुःखाधिकरणं शरीरम्। तद् द्विविधम्। लिङ्गं स्थूलरूपमिति। यद्यपि प्रळये विद्यमानेपि लिङ्गशरीरे सुखादिभोगाभावाद् भोगाधिकरणत्वं नष्टम्। तथापि भोगसमानाधिकरणद्रव्यत्वव्याप्यधर्मवृत्तित्वस्य विवक्षितत्वान्न दोषः। तत्र स्थूलशरीरम् अस्मदादीनां भूस्थानाम्। इन्द्रियं गन्धग्राहकं घ्राणम्। विषयास्तु परमाणुद्व्यणुकत्र्यणुकमृत्पाषाणरूप्यसुवर्णमाणिक्यादयः। तेषामुक्तरीत्या पृथिवीभागाधिक्यात् पार्थिवत्वं प्रत्येतव्यम्। परमाणोर्नित्यत्वादनित्यभेदविषयान्तर्भावो न युक्त इति चोद्यमग्रे निरसिष्यते॥ (इत्यधिकः खपाठः)

## विभागः

तेजआदिद्रव्यत्रयं द्विविधम्। नित्यमनित्यं चेत्यादि पूर्ववत्। पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। तत्र शरीरम् आदित्य-(स्वर्ग?)वरुणपृथिवीलोकनिवासिनाम्। इन्द्रियं तु चक्षुरसन-घ्राणानि। विषयस्तु भौमदिव्यौदर्य-सरित्समुद्रहिमकरकसुवर्ण-माणिक्यफलपुष्पादिरूपः। उक्तानां शरीरेन्द्रियविषयाणां तेज-आद्यात्मकत्वे तत्तद्भागाधिक्यं निमित्तं प्रागेवोक्तम्।

## परोक्तानुमानदूषणम्

अन्ये तु – विमतं श्रोत्रमाकाशात्मकं रूपादिषु पञ्चसु मध्ये शब्दस्यैवाभिव्यञ्जकत्वात् भेर्यवच्छिन्नाकाशवत्। त्वगिन्द्रियं वाय-वीयं स्पर्शस्यैव अभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलस्पर्शाभि-व्यञ्जकव्यजनपवनवत्। चक्षुः तैजसं रूपस्यैवाभिव्यञ्जकत्वात् दीपालोकवत्। रसनं जलात्मकं रसस्यैवाभिव्यञ्जकत्वात्, सक्तु-

---

यद्वा वाथो विमिश्रं मिश्राद् ह्येतत् भवति। मिश्राणिः भूतानि तस्मादेवैवमाचक्षते – इति काषायणश्रुतिः।

पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया। एकभूतात्मकत्वेन व्यवहारस्तु वैदिके। भौममित्येव काठिन्याच्छ्लौक्यादौदकमित्यपि। तेजिष्टत्वात्तैजसं च यथाऽस्थ्नानां वचनं श्रुतौ। – इति वायुप्रोक्ते।

पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता। इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः। इति सामान्यतो ज्ञेयं भेदं च प्रतिपूरुषम्। स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम्। – इति च बृहत्संहितायाम् (ब्र.सू. २-४-२२,२३)

रसाभिव्यञ्जकलालाजलवत्। घ्राणं पार्थिवम्, गन्धस्यैवाभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृतवत् इत्यादिप्रयोगैः, विमतानि श्रोत्रादीनि पञ्च आकाशाद्यात्मकानि शब्दादिमत्त्वात् इत्यादिप्रयोगैर्वा श्रोत्रादीनामाकाशाद्यात्मकत्वसिद्धिः – इत्याहुः। तन्न आद्यानुमाने वर्णाभिव्यञ्जके ध्वन्यात्मकशब्दे आकाशात्मकत्वाभावेन व्यभिचारात्। घटाद्यनात्मकत्वस्याप्यालोकादेः घटादिगतरूपव्यञ्जकत्ववत्, आकाशाद्यनात्मकस्य श्रोत्रादेराकाशगतशब्दादिव्यञ्जकत्वोपपत्तेरुक्तहेतूनामप्रयोजकत्वाच्च। श्रोत्रादिना शब्दादिरूपार्थसन्निकर्षे समवायादिरूपे व्यभिचाराच्च। श्रोत्रादीन्याकाशाद्यात्मकानि शब्दादिमत्त्वादित्यादिप्रयोगेषु 'तेषां परानुसंसर्गाद्यथासङ्ख्यं गुणान् विदुः'[1] इति न्यायेन शब्दादेर्वाय्वादावपि सत्वेन व्यभिचारात्। स्पर्शवत्त्वादिहेतूनां तेजआदौ व्यभिचाराच्च।

अत्र कश्चिदाह – प्राचीनप्रयोगेषु द्रव्यत्वे सतीति हेतुविशेषणान्न दोषः - इति। तन्न। चक्षुस्तैजसम्, रूपस्यैवाभिव्यञ्जकत्वात् दीपालोकवत्' इति प्रयोगे दृष्टान्ते साध्यवैकल्यात्। तथा हि – दीपालोको दीपस्य गुण एव, न द्रव्यम्। नन्वालोको गुणो भवन् प्रदीपस्य भवेत्। नान्यस्य। प्रदीपस्तु भित्तिकाबिलवर्ति। प्रभा तु तद्गृहं व्याप्य वर्तते। तत्कथं प्रदीपप्रभयोर्गुणगुणिभावः। न हि गुणिनं विहाय गुणो वर्तते। मैवम्। द्रव्यत्वेऽ-

1 भागवतं

## विभागः

तेजआदिद्रव्यत्रयं द्विविधम्। नित्यमनित्यं चेत्यादि पूर्ववत्। पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। तत्र शरीरम् आदित्य-(स्वर्ग?)वरुणपृथिवीलोकनिवासिनाम्। इन्द्रियं तु चक्षुरसन-घ्राणानि। विषयस्तु भौमदिव्यौदर्य-सरित्समुद्रहिमकरकसुवर्ण-माणिक्यफलपुष्पादिरूपः। उक्तानां शरीरेन्द्रियविषयाणां तेज-आद्यात्मकत्वे तत्तद्भागाधिक्यं निमित्तं प्रागेवोक्तम्।

## परोक्तानुमानदूषणम्

अन्ये तु – विमतं श्रोत्रमाकाशात्मकं रूपादिषु पञ्चसु मध्ये शब्दस्यैवाभिव्यञ्जकत्वात् भेर्यवच्छिन्नाकाशवत्। त्वगिन्द्रियं वाय-वीयं स्पर्शस्यैव अभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलस्पर्शाभि-व्यञ्जकव्यजनपवनवत्। चक्षुः तैजसं रूपस्यैवाभिव्यञ्जकत्वात् दीपालोकवत्। रसनं जलात्मकं रसस्यैवाभिव्यञ्जकत्वात्, सक्तु-

---

यद्वा वाथो विमिश्रं मिश्राद् ह्येतत् भवति। मिश्राणिः भूतानि तस्मादेवैवमाचक्षते – इति काषायणश्रुतिः।

पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया। एकभूतात्मकत्वेन व्यवहारस्तु वैदिके। भौममित्येव काठिन्याच्छ्लौक्यादौदकमित्यपि। तेजिष्टत्वात्तैजसं च यथाऽस्थ्नानां वचनं श्रुतौ। – इति वायुप्रोक्ते।

पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता। इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः। इति सामान्यतो ज्ञेयं भेदं च प्रतिपूरुषम्। स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम्। – इति च बृहत्संहितायाम् (ब्र.सू. २-४-२२,२३)

रसाभिव्यञ्जकलालाजलवत्। घ्राणं पार्थिवम्, गन्धस्यैवाभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृतवत् इत्यादिप्रयोगैः, विमतानि श्रोत्रादीनि पञ्च आकाशाद्यात्मकानि शब्दादिमत्त्वात् इत्यादिप्रयोगैर्वा श्रोत्रादीनामाकाशाद्यात्मकत्वसिद्धिः – इत्याहुः। तन्न आद्यानुमाने वर्णाभिव्यञ्जके ध्वन्यात्मकशब्दे आकाशात्मकत्वाभावेन व्यभिचारात्। घटाद्यनात्मकत्वस्याप्यालोकादेः घटादिगतरूपव्यञ्जकत्ववत्, आकाशाद्यनात्मकस्य श्रोत्रादेराकाशगतशब्दादिव्यञ्जकत्वोपपत्तेरुक्तहेतूनामप्रयोजकत्वाच्च। श्रोत्रादिना शब्दादिरूपार्थसन्निकर्षे समवायादिरूपे व्यभिचाराच्च। श्रोत्रादीन्याकाशाद्यात्मकानि शब्दादिमत्त्वादित्यादिप्रयोगेषु 'तेषां परानुसंसर्गाद्यथासङ्ख्यं गुणान् विदुः'[1] इति न्यायेन शब्दादेर्वाय्वादावपि सत्वेन व्यभिचारात्। स्पर्शवत्त्वादिहेतूनां तेजआदौ व्यभिचाराच्च।

अत्र कश्चिदाह – प्राचीनप्रयोगेषु द्रव्यत्वे सतीति हेतुविशेषणान्न दोषः - इति। तन्न। चक्षुस्तैजसम्, रूपस्यैवाभिव्यञ्जकत्वात् दीपालोकवत्' इति प्रयोगे दृष्टान्ते साध्यवैकल्यात्। तथा हि – दीपालोको दीपस्य गुण एव, न द्रव्यम्। नन्वालोको गुणो भवन् प्रदीपस्य भवेत्। नान्यस्य। प्रदीपस्तु भित्तिकाबिलवर्ति। प्रभा तु तद्गृहं व्याप्य वर्तते। तत्कथं प्रदीपप्रभयोर्गुणगुणिभावः। न हि गुणिनं विहाय गुणो वर्तते। मैवम्। द्रव्यत्वेऽ-

1 भागवतं

प्यस्य दोषस्य साम्यात्। तथा हि। द्रव्यं चेत्, किमकार्यं वा, कार्यम्।नाद्यः।प्रदीपारोपणान्वयव्यतिरेकानुविधानाभावप्रसङ्गात्। द्वितीयेऽपि किं सोपादानं किं वा निरुपादानम्। आद्ये किं प्रदीपोपादानकम्, उतान्योपादानकम्। नाद्यः। न हि विरुद्ध-स्वभावयोरुपादानोपादेयभावो दृष्टः। तन्न्यूनवृत्तेस्तदुपादानत्वा-योगाच्च। न ह्युपादानं मृदं विहायोपादेयो घटो भूतलादौ प्रसार्य विद्यमानः क्वचिद् दृष्टपूर्वः। न द्वितीयः। 'प्रदीपस्य प्रभा' इत्यादि तदीयत्वव्यवहाराभावप्रसङ्गात्। न हि तत्रोपादानोपादेया-त्मकजन्यजनकभावसम्बन्धातिरिक्तः तदीयत्वव्यवहारघटकः सम्बन्धोऽस्ति। अवयवावयविभावलक्षणसम्बन्धः तदीयत्वव्यव-हारघटकोऽस्तीति चेन्न। उपादानोपादेयभावातिरिक्तस्य तस्या-भावात्।

किञ्च, दीपो अवयवः, उतावयवी? नाद्यः। उक्तदोषेणान-ङ्गीकारात्। न द्वितीयः। दीपनाशे प्रभानाशाभावप्रसङ्गात्। न ह्यवयवोऽयविनमपेक्षते स्वसत्तादौ। तथा सति जीर्णकन्थायाः इतस्ततो विकीर्णानां तन्तूनां कन्थानाशेन नाशप्रसङ्गात्। न च दीपनाशेऽप्यालोको न नश्यतीति वाच्यम्। दीपनाशे भवन्नालोकः किमिति नोपलभ्यत इत्यस्य चोद्यस्य परिहाराभावात्। अन्ध-कारेणावृतत्वादिति चेन्न। आलोकस्यान्धकारनाशकत्वेन तस्य तदावरकत्वायोगात्। किञ्च, परेद्युः प्रदीपारोपणे पुनरवयवान्तराणि

विकीर्णानि। एवं परेद्युरपि ततः परेद्युरपि एवमेव इत्येवं बहवो दीपनाशेनाविनश्यन्तोऽवयवा मिलिताः पूर्वदिवसादधिकं प्रकाशयेयुः। न चैवमनुभवोऽस्ति। एवं निरुपादानत्वपक्षोऽपि दूषणीयः। भावकार्यस्य तदयोगात्। तथाचैवं दोषसाम्ये द्रव्यत्वाग्रहः किन्निबन्धनः?

अथ दीपप्रभा द्रव्यं न गुणः। गुणाश्रयत्वात्। तदपि रूपित्वात् घटादिवत्। अन्यथा गुणिनं विहाय गुणस्य व्याप्त्यनुपपत्तिरित्यनुमानेन द्रव्यत्वपक्षाग्रहो युक्त इति चेन्न। एवं रूपमेकं रसात् पृथक् शुक्लं नीलं चेत्यादि प्रतीत्या एकत्वादिसङ्ख्या पृथक्त्वशुक्लत्वादीनां सद्भावेन रूपे व्यभिचारेणोक्तसाध्यद्वयं प्रति गुणाश्रयत्वहेतोरप्रयोजकत्वात्। न चानेकत्वतादात्म्यनीलत्वादीनामभाव एव तथा व्यवह्रियत इति वाच्यम्। नियामकाभावात्। अन्यथा 'एको घटः' 'पटात् पृथक् शुक्लः' इत्यादावप्यनेकत्वाद्यभाव एव व्यवह्रियत इति गुणादिस्वरूपमेव न स्यात्। मल्लिकादिपुष्पगुणस्य गन्धादेः पुष्पाद् बहिर्निर्गतस्य दूरप्रदेशे व्याप्तिदर्शनादाभासस्तर्कः। यदि च, पुष्पावयवैः सूक्ष्मैः सहैव व्याप्तिरित्युच्यते, तर्हि इहापि दीपावयवैः सहैव दीपप्रभा व्याप्नोतीति समम्। तस्मादन्योक्तानुमानं दृष्टान्ते साध्यवैकल्यात् रत्नादिप्रभायां व्यभिचाराच्चोपेक्षणीयम्। तस्मादाकाशादिपृथिव्य-

न्तानां पञ्चानां भूतानां शब्दगुणकत्वादीनि लक्षणानि। तेषां लक्ष्येषु समन्वयप्रकारश्चोक्तरीत्याऽनुसन्धेयः।

ननु प्रथमक्षणावच्छिन्नेषूत्पन्नविनष्टेषु चाकाशादिकार्येषु निर्गुणत्वसिद्धये शब्दगुणकत्वादिलक्षणमव्याप्तम्। मैवम्। गुणगुणिनोरभेदाङ्गीकारेण सहैवोत्पत्त्या समानकालीनत्वे प्रथमं द्रव्यं निर्गुणमेवोत्पद्यते पश्चात् तत्समवेता गुणा उत्पद्यन्ते इति निर्गुणत्वसिद्धान्तस्य दुःसिद्धान्तत्वात्। गुणगुणिनोः समानकालीनत्वे समानसामग्रीकत्वात् कार्यभेदो न स्यादिति चेन्न। रूपरसयोरिव तत्तत्प्रागभावभेदेन सामग्रीभेदात् कार्यभेदोपपत्तेः। गुणगुण्यादिविभागस्तु[1] भेदस्याङ्गीकाराद् विशेषबलाच्च युक्तः।

### सुवर्णं तैजसमिति पूर्वपक्षः

अथ यदुक्तं सुवर्णमाणिक्यमृत्पाषाणादिः पार्थिवविषय इति तदयुक्तम्। सुवर्णस्य तैजसत्वात्। तथाहि – "सुवर्णं तैजसमेव न पार्थिवम्। 'अग्नेः प्रजातं प्रथमं हिरण्यम्' इति श्रुतेः। सुवर्णं तैजसम्, अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् व्यतिरेकेण जलादिवत्" इत्यनुमानाच्च।

अथ 'सुवर्णं पार्थिवम्, न तैजसं वा, पीतत्वात् जलान्यत्वे सति गुरुत्वात्, नैमित्तिकद्रवत्वाधिकरणत्वाच्च, हरिद्रापाषाण-

---

1 व्यवहारस्तु - क.

घृतादिवत्' इति सत्प्रतिपक्षः। मैवम्। स्वरूपासिद्धेः। सुवर्णं हि नाम घटः पटाद् विविक्त इव न द्रव्यन्तराद् विविक्तम्। किन्तु पीतत्वगुरुत्वाद्याश्रयावनिभागसंसृष्टभागान्तरमेव। तत्र पीतत्वादिप्रतीतिः आश्रयौपाधिकीति सुवर्णे पीतत्वादिकं नास्त्येव। किन्तु शुक्लभास्वरत्वादिकमेव। परन्तु गुडमाधुर्याभिभूतायाः निम्बादि तिक्तताया: रसनेनेव आश्रयावनिभागगतपीतिम्नाभिभूतस्य शुक्लभास्वरादेश्चक्षुषाऽग्रहणमात्रम्, प्रत्युत तद्वदेव तद्वैपरीत्येन ग्रहणम्।

ननु पार्थिवरूपेण तेजोरूपाभिभवे घटादिरूपेण तत्प्रकाशकतैजसालोकादिगतशुक्लभास्वररूपाभिभवापातः, अविशेषात्। न चेष्टापत्तिः। रूपग्रहणे उद्भूतानभिभूतरूपवदालोकसंयोगस्य हेतुत्वेनालोकरूपाभिभवे रूपग्रहणे आलोकस्य सहकारित्वं न स्यात्। न च - पार्थिवभागवृत्तिपीतिम्ना तद्गतसुवर्णरूपाभिभवो युक्तः। तदाश्रयाविभक्तभागवृत्तित्वात् सुवर्णरूपादेः। घटादिरूपेणालोकरूपाभिभवो न युक्तः। तदाश्रयघटाद्य(दि)विभक्तभागवृत्तित्वाभावादालोकरूपस्य। न हि सुवर्णमिव पार्थिवघटात् विभक्तो भाग आलोक इति वाच्यम्। तथाऽपि मण्यादिमध्यवृत्तितेजोरूपस्य मणिरूपेणाभिभवापातात्। मणिरूपाश्रयमण्याद्यविभक्ततेजोभागवृत्तित्वात्। तथाच सुवर्णमुपष्टम्भकपीतद्रव्य-

संयुक्तमपि मण्यादिमध्यवृत्तितेजोवदनभिभूतोद्भूतरूपवदिति तद्गत -शुक्लभास्वररूपस्य चक्षुषा ग्रहणापत्तिः, स्वपरप्रकाशकत्वापत्तिश्चेति चेन्न(*)।

फलबलेन पार्थिवरूपस्य क्वचिदेव तेजोरूपाभिभावकत्वं न सर्वत्रेति कल्पनादिति।

---

(*) किञ्चाङ्गारवह्निरिव मणिप्रभेव सुवर्णमप्यन्धकारे स्थितघटादेः स्वस्य च प्रकाशकं स्यात् तैजसत्वाविशेषादिति चेत्। किं मणिप्रभायामङ्गारवह्नौ स्वपरप्रकाशकत्वे तैजसत्वमेव निमित्तं स्यात्। न चैवम्। किं तर्ह्यनभिभूतरूपत्वे सति तैजसत्वं स्वपरप्रकाशकत्वे प्रयोजकम्। मणिप्रभादौ च न तद्गतं भास्वरत्वं तद्गतं रूपं वाभिभूतम्। किन्तु तद्गतशुक्लत्वमेव। अत एवाङ्गारवर्णादिकं नीलादिरूपवत्वेनैव प्रतीयते। यदि रूपमेवाभिभूतं स्यात्, कथं तर्हि नैल्याद्यारोपः। आरोपस्याधिष्ठानज्ञानपूर्वकत्वनियमात्। एवञ्च तत्र शुक्लत्वाभिभवेपि स्वपरप्रकाशकयोरुपयुक्तभास्वरत्वस्यानभिभवाद्युक्तं तत्र स्वपरप्रकाशत्वम्। सुवर्णे तु तद्गतरूपतद्गतशुक्लभास्वरत्वादीनामुपष्टम्भकपीतद्रव्येण अभिभूतत्वात् स्वपरप्रकाशकत्वाभावः, पार्थिवरूपस्य क्वचिदेव तेजोरूपाभिभावकत्वमित्यादेः फलबलेन कल्पनादिति ॥

उदयनस्त्वाह – सुवर्णस्य तैजसत्वं धर्मिग्राहकमानसिद्धम्। अत्यन्तानलसंयोगेपि पूर्वरूपविजातीयरूपानधिकरणपीतद्रव्यं पार्थिवं पूर्वरूपविजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तम् अत्यन्तानलसंयुक्तत्वे सति पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् क्वथ्यमानजलमध्यस्थपटवदिति सामान्यतः तादृशपार्थिवनिष्ठसंयोगप्रतियोगित्वेन यत्किञ्चिद्द्रव्यसिद्धिः। पार्थिवमात्रे घटादौ पूर्वरूपविजातीयरूपानधिकरणत्वाभावेन तत्र प्रतिबन्धकद्रवद्रव्यसंयोगाभावेन

## सुवर्णस्य पार्थिवत्वसमर्थनम्

अत्रोच्यते – अनुकूलतर्काभावेनाद्यानुमानं तावदप्रयोजकम्। अत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानद्रवत्त्वं करकादौ काठिण्यमिवादृष्टविशेषादेवोपपन्नमिति न हेतोः साध्येन विनाऽनुपपत्तिः। पार्थिवत्वसाधकपीतत्वादिनोक्तहेतुत्रयेण सत्प्रतिपक्षितं च। अनुकूलतर्कसाहित्येन प्रबलेन पीतत्वाद्यनुमानेन बाधितं च। न चासिद्धिः शङ्कनीया। पीतत्वगुरुत्वाद्याश्रयावनिभागवृत्ति[1]तैजसं भागान्तरं सुवर्णमित्यादिप्रक्रियाविशेषस्य स्वगोष्ठीमात्रत्वेन पीतत्वाद्याश्रयवृत्तिभागान्तरस्यासत्कल्पनत्वात्। न चैतद्भागे मण्यादिमध्यवृत्तितैजस इव प्रत्यक्षमस्ति। (*)

येन फलबलादन्यत्र मण्यादिमध्यवृत्तितेजोवदुपष्टम्भकपीत-

1 अवनिभागवृत्ति = संश्लिष्टतया वर्तमानेत्यर्थः – न्यायदीपे

चासिद्धिबाधे स्यातामिति अत्यन्तानलसंयोगेपि इति पक्षविशेषणम्। द्रवसंयुक्तत्वमात्रे साध्ये तादृशपार्थिवद्रव्ये अग्निसंयोगमादायार्थान्तरतावारणाय द्रव्येति विशेषणम्। तावत्युक्ते इन्द्रियजलसंयोग(?)मादाय सा स्यादिति पूर्वदलम्। हेतौ च विशेष्यमात्रे कृते घटादौ व्यभिचारः। अतः पूर्वदलम्। तत्र[1] प्रतिबन्धकद्रव्यं च न जलम्। नैमित्तिकद्रवत्वशून्यत्वात्। नापि पार्थिवम्। दाहाविरोधित्वात्(?)। एवमुभयभेदे सिद्धे तद् द्रव्यं तैजसं पृथिवीजलान्यत्वे सति रूपित्वात् दीपादिवत्। एवञ्च तादृशपार्थिवान्तर्गतभागग्राहकमानेन तैजसत्वं सिद्ध्यतीति ॥

1 उक्तानुमानेन सिद्ध्यदित्यर्थः।

द्रव्यवृत्तिभागान्तरं सुवर्णमपि स्वपरप्रकाशकं प्रत्यक्षं च स्यादिति दुर्वारा प्रतिबन्दीत्यलम् ।

(*) न चेह तद्भागे प्रत्यक्षमस्ति। तत्र तत्सत्वे तद्गतशुक्लभास्वररूपेपि तत्स्यात्। (नच पार्थिवरूपाभिभवः तत्रापि प्रत्यक्षम्(?) इत्युक्तमिति वाच्यम्।)[1] पार्थिवरूपस्य तेजोरूपाभिभावकत्वे अङ्गारवह्नौ मणिप्रभायां च रूपस्य पार्थिवभागेनाभिभावापातात्। वह्न्यादिवदेव सुवर्णस्यापि स्वपर-प्रकाशकत्वं च स्यात् । न रत्नप्रभायाः वन्हेरिव उपष्टम्भकत्वेनाभिमतपीतद्रव्यात् भिन्नस्य त्वदभिमतस्य सुवर्णस्य कदाप्यनुभवः येन तादृशभागस्य प्रमितत्वफलबलेनाभिभवकल्पनं सङ्गच्छेत् । किञ्च महत्त्वे सत्युद्भूतरूपतैजसत्वस्य प्रकाशकत्वे प्रयोजकतया सुवर्णगतरूपस्याभिभवसत्वेऽपि उद्भूतत्वाक्षतेः सुवर्णस्य तैजसत्वे स्वपरप्रकाशकत्वप्रसङ्गो दुर्वारः । उद्भूतत्वं हि जातिविशेषः । तदभावोऽनुद्भूतत्वम् । अनुद्भूतत्वं जातिविशेषः । तदभाव उद्भूतत्वमिति वा तव मतः। नचाभिभूतत्वमपि प्रवेशनीयम्। अन्यथा ग्रीष्मोष्मादौ प्रकाशकत्वं स्यादिति वाच्यम्। तत्रोद्भूतरूपानङ्गीकारेण तत्पदेनैव तद्वारणात्। अन्यथा ग्रीष्मोष्मणः दीपज्वालाया इव चाक्षुषत्वानिवारणात्। अत एवोदयनोक्तमपि निरस्तम् । करकादौ अदृष्टविशेषात् पूर्वरूपनाशाभावसम्भवेन तत्प्रतिबन्धकद्रव-द्रव्यान्तराकल्पनाच्च। किञ्च विजातीयरूपान(?)धिकरणत्वं तादृशरूपप्रति-बन्धकयत्किञ्चिद्वस्तुसाधकमपि न द्रवद्रव्यसंयोगसाधकम् । व्याप्यभावात् । नच तावता इष्टसिद्धिः। अदृष्टविशेषस्यैव तथात्वसम्भवात्। अन्यथा करकादौ द्रवत्वप्रतिबन्धकत्वं पार्थिवद्रव्यत्वेन सम्प्रतिपन्नवज्रमणौ विजातीयरूपप्रति-बन्धकत्वं चादृष्टस्याङ्गीकृतं न स्यात्। तत्रापि कठिनभागाद् भागान्तरस्य तत्प्रतिबन्धकत्वं कल्प्येत। (खपाठः)

1 न च पार्थिवरूपेणाभिभवस्तत्रापि वर्तत इति वाच्या – इति पाठः सम्भाव्यते।

किञ्च 'दिव्यं[1] पार्थिवं वसु', [2]'जम्बूनदीरोधसोर्मृत्तिका जम्बूफलरसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन जाम्बूनदं नाम सुवर्णं भवति इति तावती भूमिः काञ्चन्यादर्शतलोपमा' इत्याद्यागमविरोधः। अत एव 'अग्नेः प्रजातं प्रथमं हिरण्यम्'[3] इति श्रुतिः सुवर्णस्याग्निर्निमित्तकारणमित्याह, न तु तदात्मकतामिति न तच्छ्रुतिविरोधः[*]।

तदेवं पार्थिवविषयेषु सुवर्णस्य परिगणनं युक्तमिति।

* * * *

---

1 यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु।
तन्नः पुनान आभर। – बह्वृचशाखायाम्

2 पञ्चमस्कन्धभागवते। मेरुसमीपस्थ काचिन्नदीतीरयोर्मृत्तिकेत्यर्थः। पूर्ववाक्योक्तस्यानुवादो जाम्बूनदीति॥ अन्यसमं धावन्मानसोत्तरमेर्वोरन्तरं तावतीति षण्णवतिलक्षयोजनपरिमिता काञ्चनी सुवर्णमयी दर्पणतलवदतिश्लक्ष्णतमेति स्वादूदकसमुद्रात् परतो लोकालोकपर्वतादर्वाग्भागभूमिरित्यर्थः – न्यायदीपे

3 अग्नेः प्रजातं प्रथमं हिरण्यम् इति श्रुतिस्तु अग्नेराप इत्यादि श्रुतिवत् अग्नेर्हिरण्यनिमित्तत्वमाह। न तु हिरण्यस्य अग्न्यात्मकताम्। – तर्कताण्डवे

(*) किञ्च सुवर्णस्य तैजसत्वे[1] तुलापुरुषादिदर्शने शतपरिमितत्वसहस्रपरिमितत्वाद्युक्तिः कथं घटते? तेजसो गुरुत्वेनाप्रमितत्वात्। तस्मात् सुवर्णं पार्थिवम्। (खपाठः)

---

1 तुलायां सुवर्णपुरुषमाक्षेप्य दर्शने इत्यभिप्रायः स्यात्।

## अद्वैतमतोक्तसृष्टिप्रक्रिया

तथाच भगवानीश्वरः पञ्चीकृतैः वा महदादिपृथिव्यन्तैः चतुर्विंशतिविधैः सूक्ष्मैः आकाशवायुतैजसाप्यपार्थिवपरमाणून् पञ्चविधान् सृजति।

तत एकपरमाणुराकाशीयम्, आकाशीयेन सजातीयेन परमाण्वादिजातीयेन वाय्वीयादि परमाणुना सह(?) एकेन द्वाभ्यां वा सङ्कलय्याकाशीय-द्व्यणुकमुत्पादयति। एवमेव स द्व्यणुकं सजातीयेन वा एकेन द्वाभ्यां त्रिभिर्वा द्व्यणुकैः सङ्कलय्य त्र्यणुकमुत्पादयति। एवमेव यथा चतुरणुकाद्याकाशं द्रव्यं तथा वायवीयादिचतुर्विधं द्रव्यं चतुरणुकान्तमुत्पादयति। ततः तानि सर्वाणि पुनः सङ्कलय्य खण्डावयवपरम्परया पटाद्यन्त्यावयविद्रव्योपादानभूतं तन्तु-पर्यन्तमुत्पद्यते। तत्(?) कारणावस्था कार्यावस्थाभेदेन द्विविधम्। तत् कारणात्मना सदपि न कार्यात्मना सत्। अत एव कर्तृव्यापारोपि सफलः। तत्र च तुरीवेमादिकं निमित्तकारणम्। सति चैवं तन्तुव्यतिरेकेण पटस्यैवाभावात् तन्तुपटयोर्विशेषणविशेष्यभावनिर्वाहाय संयोगः समवायो वा सम्बन्धो न गवेषणीयः। किन्तु तयोस्तु स्वरूपसम्बन्धेनैव विशेषणविशेष्यभावनिर्वाह इत्यादि प्रक्रियाविशेषो सञ्ज्ञातव्यः। तत्र त्रिवृत्करणप्रकारस्तु पृथिव्यप्तेजसां मध्ये पृथिवीं द्वेधा विभज्य द्वितीयं भागं द्वेधा विभज्य एकं भागमप्सु अपरं भागं तेजसि, एवमेवापो द्वेधा विभज्य एकं पुनः द्वेधा विभज्य एकं पृथिव्याम् एकं तेजसि, तेजोपि विभज्य एकं पुनः द्वेधा विभज्य, एकं पृथिव्यां एकमप्सु संयोजयति। एकः पृथिवीभागो, अप्-तेजोभागाभ्यां संसृष्टः, सा पृथिवीति गीयते। एवमापस्तेजसश्च। तदिदं त्रिवृत्करणं नाम। यदा तु पृथिव्यादीनां मध्ये पृथिवीं द्वेधा विभज्य, एकं पुनः चतुर्धा विभज्य, एकमप्सु द्वितीयं तेजसि तृतीयं वायौ चतुर्थमाकाशे संयोजयति, एवमेव अपां द्वेधा विभज्य, एकं पुनश्चतुर्धा विभज्य, पृथिव्यामेकं वायावेकं तेजस्येकं आकाशे एकं संयोजयति,

## तार्किकोक्तसृष्टिप्रक्रिया

तार्किकास्तु –

प्रलये विभक्ताः पार्थिवाप्यतैजसवायवीयाश्चत्वार एव परमाणवः सन्ति। न त्वाकाशीयाः। निरवयवत्वादाकाशस्य। एवं शब्दादीनां पञ्चानां विशेषगुणत्वेन निरवयवत्वात्, श्रोत्रादीनामाकाशाद्यन्तर्भावात्, महदहङ्कारयोश्च स्वरूपेणैवाभावे परमाणवो न सन्ति। ते च 'यतः परमाणुर्नास्ति स परमाणुः' इति निर्वचनान्निरंशाः। नित्याश्च। तेषु च सिसृक्षालक्षणया ईश्वरेच्छया जीवगतादृष्टोद्बोधनेन परमाणुषु क्रिया जायते। तस्याः परमाणुः समवायिकारणम्। यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणमिति लक्षणात्। 'या क्रिया[1] यदिन्द्रियव्यधिकरणगुणजन्या सा

---

1 या क्रिया स्वव्यधिकरणयदीयगुणजन्या सा तत्संयोगासमवायिकारणका

तेजश्च विभज्य, एकं पुनः चतुर्धा विभज्य तेजोव्यतिरिक्तेषु पृथिव्यादि चतुर्षु संयोजयति। एवं वायुमाकाशम्। तदेवमेकैको भागः मिश्रितभागचतुष्टयेन पञ्चीकृतो भवति। पञ्चीकृतमहाभूतानि उक्तरीत्या स्थूलं ब्रह्माण्डं तदन्तवर्तिशरीरादिकार्यजातं जनयन्ति। तत्र पञ्चीकृतमहाभूतैः स्थूलशरीरम्, अपञ्चीकृतैः तु सूक्ष्मं लिङ्गशरीरमुत्पद्यते। अत एव च पार्थिवादिशरीरे अबादिभागा दृश्यन्ते। तथोक्तम् –

अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गीं भोगसाधनम्।
पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम्।
शरीरं सुखदुःखानां भोगायतनमुच्यते॥ (आत्मबोधे शङ्कराचार्यविरचिते)

तत्संयोगासमवायिकारणका' इति व्याप्तेः अदृष्टवदात्मनः परमाणुभिः संयोगोऽसमवायिकारणम्। समवायिकारणप्रत्यासन्न-मवधृतसामर्थ्यमसमवायिकारणमुच्यते। ततः पार्थिवपरमाणुः पार्थिवेनैव परमाण्वन्तरेण संयुज्यते न त्वाप्यादिना। एवमाप्योऽपि परमाणुः न पार्थिवादिना परमाण्वन्तरेण, किन्तु सजातीयेनैव। तथाच पार्थिवपरमाणुद्वयं मिथः संयुक्तं स्वसमवेतं पार्थिवद्व्यणुकं नाम कार्यं कारणादत्यन्तभिन्नं प्रागत्यन्तासदेवोत्पादयति। उत्पत्तिश्चासतः सत्तासम्बन्धः[(1)]।

ततो द्व्यणुकानां त्रयाणां सजातीयानामेव संयोगो जायते। तत्र त्र्यणुकाख्यं कार्यमुत्पद्यते। अत्र यद्यपि त्रिभिर्द्व्यणुकैः जातत्वात् त्रिद्व्यणुकमिति सञ्ज्ञा युक्ता। तथाऽपि द्व्यणुकेऽपि अणुत्वस्य[(2)] सद्भावेन [(3)]त्रिभिरणुकैरारब्धत्वसम्भवः। ततः

---

इति पाठः सम्भाव्यते। सृष्टिकाले प्राप्ते ईश्वरेच्छयाऽऽत्मनि अदृष्टोद्बोधो जायते। तादृशादृष्टवदात्मनः परमाणुभिः संयोगे सति परमाणुक्रिया जायते। तस्याश्च स्वव्यधिकरणभूतः यः आत्मनिष्ठः अदृष्टाख्यो गुणः तज्जन्यत्वात्परमाणुभिः सहादृष्टवदात्मनः संयोगः असमवायिकरणमिति कथने तात्पर्यमिति भाति।

1 परमाण्वन्तरेण सजातीयेन संयोगस्यैव द्व्यणुकादिकार्यजनकत्वनियमात्। ये च परमाणवो द्रव्यारम्भाय संयुज्यन्ते ते द्वौ द्वावेवेत्यप्यस्ति नियमः। नतु परमाणुपुञ्जवादिमत इव निरन्तरतयोत्पन्नं परमाणुद्वयमेव संयुक्तमासादित-परिमाणविशेषं द्व्यणुकं प्रागसदेवोत्पद्यते। कर्तृव्यापारवैयर्थ्यात्। (खपाठः)

2 अनित्याणुत्वस्य –इति मूलकोशे

3 त्रिभिरणुकैरेवास्य त्र्यणुकस्योत्पत्तिसम्भवः – क.

सजातीयैः संयुक्तैः चतुर्भिः त्र्यणुकैश्चतुरणुकाख्यं कार्यं जायते। यद्यपि त्र्यणुके [1]अणुत्वाभावान्नान्वर्थसञ्ज्ञा। तथाऽपि त्र्यणुकेष्वणुसञ्ज्ञोपचाराद् भवति। एकदेशिनस्तु चतुर्भिर्द्व्यणुकैरेव चतुरणुकोत्पादनमभ्युपयन्ति[2]।

**तन्निराकरणम्**

अत्रोच्यते -

**पञ्चभिर्पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥[3]**

**'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम्'**

**'नित्यान्येतानि सौक्ष्मेण हीन्द्रियाणि च सर्वशः'[4]**

---

1 ०केष्वनित्याणुत्वाभावान्नान्वर्थसञ्ज्ञा - क

2 तदा द्व्यणुकेष्वणुत्वसञ्ज्ञाभावात् अन्वर्थसञ्ज्ञैव । ततः त्र्यणुकेभ्यः चतुरणुकेभ्यो द्रव्यसमवायिकारणानि कार्यद्रव्याणि शरीरेन्द्रियविषयाख्यान्यन्त्यावयवीनिबद्धावयविनः त्र्यणुकादेरन्त्यावयविनश्च मध्येऽनियतसङ्ख्याखण्डावयविद्वारोत्पद्यन्ते। तदेवं पृथिव्यप्तेजोवायूनां चतुर्णां द्रव्याणामेवोत्पत्तिः नत्वाकाशादीनां पञ्चानाम्। नित्यत्वेन परमाण्वाद्यवयवाभावेन तेषां समवायिकारणाद्यभावात्। पार्थिवघटादीनां तु मृत्पिण्डादिः समवायिकारणम्। एवं तस्य खण्डावयवी तस्य च खण्डावयवी तस्यनन्तरं तस्य चतुरणुकं तस्य च द्व्यणुकं तस्य च परमाणुरित्येवं समवायिकारणपरम्परेत्याहुः। (खपाठः)

3 भागवते ३-२७-१२

4 सूत्रभाष्योदाहृतभविष्यत्पर्ववचनम्

इत्यादिप्रमाणैर्महदादिपृथिव्यन्तानां तत्वानामारम्भकाश्चतुर्विंशतिविधाः परमाणवः दुरपह्नवा इति चत्वार एव परमाणव इति पक्षस्तावदनुपपन्नः। आकाशस्य निरवयवत्वं प्रागेव दूषितम्।

किञ्च 'शब्दस्पर्शरूपरसगन्धा मे शुध्यन्ताम्' इति शुद्धिप्रार्थनलिङ्गात् द्रव्यरूपा मात्राशब्दिताः पञ्चपरमाणवः तज्जन्याः द्रव्यरूपाः पञ्चकार्यविशेषाश्चाङ्गीकार्याः। न हि गुणानां शुद्धिप्रार्थनं युज्यते। अमूर्तत्वात्। किञ्च प्रायश्चित्तखण्डे अशुद्धिप्रसक्तौ दार्वादिद्रव्याणामेव तक्षणादिप्रायश्चित्तं विधीयते। न हि तक्षणादिकं गुणे सम्भवतीति। इहापि शुद्धिप्रार्थनमिदं प्रायश्चित्तं विधीयमानं शब्दादीनां द्रव्यत्वमाक्षिपति। किञ्च, एषां पञ्चानामद्रव्यत्वे चतुर्विंशतिसङ्ख्या न स्यात्। तस्माद् गुणातिरिक्ताः पञ्चद्रव्यरूपा शब्दादयः न सन्तीत्येतद् दुराग्रहमात्रम्।

यच्चोक्तम् - 'सृष्टिकाले पार्थिवाः परमाणवः सजातीयेनैव संयुक्ताः पार्थिवं कार्यमुत्पादयन्ति, न तु विजातीयैराप्यपरमाणुभिः' इत्यादि। तदयुक्तम्। चतुर्विंशतितत्वानां सम्भूय तत्तत्कार्यजनकत्वस्यागमसिद्धत्वात्। किञ्च, पार्थिवे कार्यद्रव्ये स्पर्शादयः गन्धान्ताश्चत्वारोपि गुणाः प्रतीयन्ते, न गन्धमात्रम्। तद्यदि आप्यादिपरमाणुभिरसंयुक्तैः केवलैः पार्थिवपरमाणुभिः पार्थिवद्रव्यारम्भः स्यात्, कथं तर्हि रसादिगुणत्रयप्रतीतिः स्यात्।

कार्यगतगुणानां कारणगुणपूर्वकत्वनियमात्। पार्थिवपरमाणुमात्रारब्धे गन्धमात्रोत्पादेऽपि गुणान्तरोत्पादाभावात्।

यच्चोक्तम् – 'पार्थिवपरमाणौ चत्वारोऽपि गुणाः सन्ति न गन्धमात्रम्। दृष्टानुसारिणी हि कल्पना। एवमाप्यादिपरमाणुष्वपि गुणान्तरमस्ति' इत्यादि। तदसारम्। शब्दादयो हि विशेषगुणा इत्युभयसम्मतिः। विशेषगुणवत्त्वं च नियतैकद्रव्यव्यवच्छेदकत्वमेव। नान्यत्। तच्च पार्थिवे परमाणौ गन्धमात्रम्, आप्ये रसमात्रम्, तैजसे रूपमात्रम्, वायवीये स्पर्शमात्रमिति व्यवस्थाङ्गीकृतावेव निर्वहणीयम्। नान्यथा। स्पर्शादेः द्रव्यान्तरव्यवच्छेदकत्वात्। गुणान्तरप्रतीतिस्तु विजातीयपरमाणुसंयोगजन्यत्वोपाधिना निर्वहणीया। तथाचोक्तम् –

भूतानां नभआदीनां यद्यद्भाव्यं परात्परम्।
तेषां परानुसंसर्गाद् यथासङ्ख्यं गुणान् विदुः[1] ॥

इति। अत्र हि 'परानुसंसर्गात्' इत्यनेन स्पष्टं गुणान्तराणामौपाधिकत्वं प्रतीयते[2]।

अत्र कश्चिदाह – 'नवानां लक्षणानां मध्ये लक्षणद्वयसामानाधिकरण्यरहितगुणत्वव्याप्यजातिमत्त्वं गुणत्वव्याप्यजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वं वा विशेषगुणत्वम्। तेन संयोगादि-

1 भागवते तृतीयस्कन्धे
2 'इति तदप्येतेन निरस्तम्' – इति वाक्यमत्र संयोजनीयमिति भाति।

सामान्यगुणव्यावृत्तिः । तस्य द्रव्यद्वयवृत्तित्वात्- इत्यादि । तद -युक्तम् । स्पर्शादावव्याप्तेः । लक्षणद्वयवतोर्वायुतेजसोर्वृत्तेः । न च तत्रापि अनुष्णाशीतस्पर्शो वायोरेव, उष्णस्पर्शः तेजस एवेत्यादि व्यवस्थाश्रयणान्न दोषः । स्पर्शविशेषे [1]लक्षणसद्भावेऽपि स्पर्शसामान्ये तदभावात् । स्पर्श एव हि विशेषगुणत्वेन व्यवह्रियते । न तु तद्विशेषः ।

## परिमाणोत्कर्षापकर्षानन्त्यसमर्थनम्

'यतः परमाणुर्नास्ति स परमाणुः' इति निर्वचनं चायुक्तम् । [2]तदंशस्य ततोऽप्यणोरङ्गीकार्यत्वात् । अन्यथा त्रिभिः परमाणुभिः संयोगानुपपत्तिः । अंशसद्भावे तु भागभेदेन द्वाभ्याम् एकस्य संयोगो युक्तः[3] ।

---

1 लक्षणद्वयसामानाधिकरण्यसद्भावेऽपि - क.

2 तारतम्यस्थिता यस्मात्पदार्थाः सर्व एव च – अनु. २-२-६

3 अत्रोच्यते – लोके द्वाभ्यां त्रिभिः चतुर्भिः पञ्चषादिभिश्चावयवैरन्योन्यसंयुक्ते लोष्ठादिकार्यं जायत इत्यनुभवसिद्धम् । तद्वदेव सर्गाद्यकालीनं द्व्यणुकादि- कार्यजातमनेकैः परमाणुभिरन्योन्यसंयुक्तैर्जायत इत्यङ्गीकार्यम् । न पुनर्द्वाभ्यामेवेति नियमः । प्रमाणाभावात् । एतेन पार्थिवद्व्यणुकाद्युत्पत्तौ नाप्यादि परमाणुसंयोगः कारणम् । विजातीयत्वात् । किन्तु पार्थिवपरमाणुसंयोग एवेति निरस्तम् । पार्थिवद्व्यणुकादेः पार्थिवस्य कुड्यादेर्जलादिविजातीयद्रव्यसंयोगादपि जन्मदर्शनात् । यतः परमाणुर्नास्ति स परमाणुरिति निर्वचनं चायुक्तम् । तदंशस्य ततोप्यणोरङ्गीकार्यत्वात् । तथा हि त्रिभिः परमाणुभिः संयुक्तैः द्व्यणुके

एतेन सर्षपमहीधरारम्भकाणामवयवानामुक्तन्यायेनानन्तानां समसङ्ख्यात्वात् तदारब्धयोः परिमाणभेदो न स्यादिति निरस्तम्। [(1)]आनन्त्येऽपि तारतम्यसद्भावात्। अनन्ता हि पार्थिवपरमाणवः अनन्ताश्च तार्किकाङ्गीकृता अन्त्यविशेषाः। न च ते समसङ्ख्याः। तथा सत्याप्यपरमाणुषु विशेषाभावापातात्। अतो विशेषानन्त्यमधिकं पार्थिवपरमाण्वानन्त्यादिति वक्तव्यम्। एवं कल्प-वत्सर-अयन-ऋतु-मास-पक्ष-दिन-याम-घटिका-क्षणादीनामानन्त्यमपि तारतम्योपेतम्, उत्तरोत्तरमानन्त्याधिक्यानुभवात्।

तथाच एक एव परमाणुः स्वावयवापेक्षया महान्। तदवयवोऽपि स्वायववापेक्षया महान्। सोऽपि तथा। सोऽपि तथा। एवं परमाणुः स्वावयवापेक्षया महानपि द्व्यणुकापेक्षयाऽणुरेव। एवं द्व्यणुकमपि परमाण्वपेक्षया महदपि स्वकार्यत्र्यणुका-

जनयितव्ये परस्परसंयोगोप्यपेक्षणीयः। अवयवसंयोगाभावे कार्यादर्शनात्। यद्येकः परमाणुः द्वितीयेन परमाणुना संयुज्यते तदा कथं तृतीयेन परमाणुना न संयुज्यते? ननु देवदत्तेन स्पृष्ट एव घटो यज्ञदत्तेनापि न संस्पृशत एवेति चेत् यो भागो देवदत्तेन स्पृष्टः न स एवान्येन स्पृश्यते। नन्विहापि एकपरमाण्वोः यो भागो द्वितीयेन संयुज्यते न स एव तृतीयेन संयुज्यते किन्त्वन्यैव भाग इति चेत् तर्हिनङ्गीकृत एव परमाणोरप्यंशः। (खपाठः)

1 आनन्त्येऽपि तारतम्यसम्भवात्। अनन्ता हि पार्थिवपरमाणवोऽनन्ताश्चान्त्यविशेषाः। न च ते समसङ्ख्याः। तथा सत्याप्यपरमाणुषु तदभावापातात्। तथा सर्वकल्पेषु संसारिणोऽनन्ताः। तथाऽप्यपवर्गवशात्तारतम्यमुपेयमेव। एवमनेकमुदाहरणमिति – न्या.सु. ३-२-६

पेक्षयाऽण्वेवेति न महत्त्वाणुत्वयोः क्वचिद् विश्रान्तिरस्ति। [(1)]आपेक्षिकमहत्त्वाणुत्वयोः सर्वत्र सर्वानुभवसिद्धत्वात्[(*)]।

---

1 अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया – अनु.२-२-६

(*) नन्वणुत्वं महत्त्वं च परिमाणावान्तरजातिविशेषः। तत्कथं परमाणोः साङ्कर्यमिष्यते। तथा सति परमाणुगताणुपरिमाणेन द्व्यणुके अणुपरिमाणस्योत्पत्तिः स्यात्। न पुनः महत्परिमाणस्य। सर्वस्यापि स्वसदृशकार्यपरिमाणजनकतानियमः। एवं द्व्यणुकगताणुपरिमाणात्त्र्यणुके अणुपरिमाणोत्पत्तिः स्यात्। एवं तत्तत्कार्येषु स्थिति(?)जनकत्वनियमेन तत्रापि परिमाणस्य स्वसदृशपरिमाणजनकत्वनियमेन द्व्यणुकपरिमाणात्त्र्यणुकं तत्परिमाणाच्चतुरणुकमित्येवं परमाणुमारभ्यान्त्यावयविपर्यन्तस्य कार्यस्योक्तन्यायेनाणुत्वप्राप्त्या महदुद्भूतरूपस्पर्शानां प्रत्यक्षप्रयोजकानां मध्ये उद्भूतरूपस्पर्शयोः सत्वेपि महत्त्वस्याभावात्। प्रत्यक्षत्वानुपपत्तिः। एवं परमाणोर्महत्त्वे तज्जन्यद्व्यणुकेपि उक्तन्यायेन महत्त्वापत्त्या प्रत्यक्षत्वप्रयोजकानां त्रयाणामपि सत्वात् तस्य प्रत्यक्षत्वापत्तिः। न च तत्रोद्भूतरूपस्पर्शयोः अन्यतराभावः शङ्कनीयः। त्र्यणुकादेरपि तदभावापत्तेः।

तथाच परमाणुपरिमाणस्य नाणुत्वं महत्त्वं वाङ्गीकर्तुं शक्यम्। एकस्मिन्नेव द्रव्ये अणुत्वमहत्त्वसमावेशस्यानुभवासिद्धतया साङ्कर्यप्रसङ्गेन सन्निकृष्टत्वादि जातेरेव निराकरणात्। अत एव प्रत्यक्षत्वमपि न जातिः पुरुषभेदेनोभयोरपि[(1)] साङ्कर्यात्। नहि मन्दविलोचनस्य देवदत्तस्याप्रत्यक्षं त्र्यणुकादि सर्वस्याप्यप्रत्यक्षम्। नच तत्रापि फलोपाधानाभावेऽपि प्रत्यक्षयोग्यतास्तीति वाच्यम्। परमाण्वादावप्यस्मदादिप्रत्यक्षफलोपाधानाभावेपि तद्योग्यत्वसम्भवात्। अत

---

1 अणुत्वमहत्त्वोभयोरपि

न चैवमुक्तरीत्या प्रत्यक्षताप्रयोजकस्य महत्त्वस्य सर्वत्र सत्वेन सर्वस्यापि सर्वप्रत्यक्षगोचरतापत्तिरिति वाच्यम्। फलबलेन महत्त्वविशेषस्यैव तत्प्रयोजकताकल्पनात्।

नन्वेवं सति परममहच्छब्दपरमाणुशब्दयोर्लोके आकाशपरमाण्वोरेव प्रयुज्यमानयोरन्वर्थसञ्ज्ञयोर्निर्वचनानुपपत्तिः। 'यतः

---

एव योगित्वदशायाम् अस्मदादीनामेव प्रत्यक्षमङ्गीकृतम्। तेन प्रत्यक्षत्वाप्रत्यक्षत्वं न महत्त्वादिमात्रकृतम्। किन्तु पुरुषाणामिन्द्रियपाटवापाटवकृतमिति विवेक्तव्यम्। तर्हि गगनादेरपि पटुकरणं प्रति प्रत्यक्षता स्यादिति चेन्न। महत्त्वादिप्रत्यक्षसामग्र्या इन्द्रियपाटवस्यापि परिसङ्ख्यानेनोद्भूतरूपादीनां तत्सामग्रीत्वापरित्यागात्। आकाशे चेन्द्रिये पाटवमहत्त्वयोः सद्भावेऽपि उद्भूतरूपाभावान्न प्रत्यक्षता। तस्माद्व्यणुकादौ प्रत्यक्षत्वाभावः, न महत्त्वविपर्ययाधीनः किन्तु इन्द्रियपाटवाभावाधीन एव। ननु – "द्व्यणुकनुपलम्भो, गुणविशेषविपर्ययाधीनः, आलोकेन्द्रियसन्निकृष्टचाक्षुषद्रव्यविषयानुपलम्भत्वात् पवनानुपलम्भवत्"। अत्रालोकेन्द्रियासन्निकृष्टद्व्यणुकस्य पक्षत्वे आलोकेन्द्रियसन्निकर्षाभावाधीनत्वमादाय अर्थान्तरतापरिहाराय आलोकेन्द्रियसन्निकृष्टेति द्व्यणुकविशेषणं पक्षेपि ग्राह्यमित्यनुमानेन महत्त्वरूपगुणविपर्ययाधीनत्वं द्व्यणुकानुपलम्भस्य वाच्यम् इति चेन्न। प्रकृष्टमहत्त्वगुणविपर्ययाधीनत्वेनार्थान्तरत्वात्। पर्वतादेरपि अप्रत्यक्षता स्यात्। गगनाद्यपेक्षया प्रकृष्टमहत्त्वाभावादिति चेन्न। अप्रकर्षविशेषस्य विवक्षितत्वात्। न चासौ व्यवस्थितोस्तीति चेत्। सत्यम्, पुरुषापेक्षया प्रत्यक्षयोरिव व्यवस्थितत्वादिति सूक्तम्। (खपाठः)

परं महन्नास्ति स परममहान्', 'यतः परमणुर्नास्ति स परमाणुः' इत्येवं हि तन्निर्वचनम्।

अत्रोच्यते। अन्यानन्तर्गतत्वं परममहत्त्वम्। तच्चान्यान्तर्गतत्वे सति तद्बहिष्ठत्वाभावाभावः। अत्र लक्ष्यं परममहच्छब्दवाच्यम् आकाशं कालः प्रकृतिः ब्रह्मेति चतुष्टयम्। आकाशादीनां चतुर्णां ब्रह्माण्डस्यान्तः तद्बहिश्च सत्वात् तेषु लक्षणमस्ति। न ह्याकाशादिः क्वचिद्देशे नास्तीति शक्यते वक्तुम्। अलक्ष्येषु आकाशकालप्रकृतीश्वरांशेषु घटादिषु[1] तद्ब्रह्माण्डान्तरपि सत्त्वात् तद्बहिरसत्त्वात् लक्षणं नास्ति। न ह्याकाशाद्येकदेशो बहिः सन्निति वक्तुं शक्यम्। तदंशानां तत्र तत्रैवावस्थाननियमात्। तदुक्तम् -

सत एव पदार्थस्य स्वरूपावस्थितस्य यत्।
कैवल्यं परममहानविशेषो निरन्तरः ॥[2] इति।

अन्यानन्तर्गतत्वपरेण स्वरूपावस्थितपदेन ब्रह्माण्डान्तर्गतानामाकाशाद्यंशानां घटादीनां च व्यावृत्तिः। अन्यप्रतीतिनिरपेक्षप्रतीतिकत्वपरेण केवलपदेन जगदावरकवासुदेवादिरूपविशेषस्य व्यावृत्तिः। अप्रादुर्भूतत्वपरेण अविशेषपदेन परम-

1 "आकाशकालप्रकृत्यंशेषु तेषां घटादिषु ब्रह्माण्डान्तरपि" इति पाठः सम्भाव्यते।

2 भागवते ३-१२-२

पुरुषादिरूपस्य व्यावृत्तिः। अनंशत्वपरेण निरन्तरपदेन पर-ब्रह्मावयवहस्तचरणादिव्यावृत्तिरिति पदानामुपयोगसत्वेऽपि, अन्यानन्तर्गतत्वपरं स्वरूपावस्थितपदमेव लक्षणोपस्थापकम्। इतराणि पदानि तत्स्वरूपकथनार्थानि।

एवं दिव्यपुरुषग्राह्यांशरहितत्वं दिव्यपुरुषाग्राह्यांशवत्वं महा-पुरुषैकग्राह्यांशवत्त्वं वा [1]परमाणुत्वम्। यो यागादिना स्वर्गं प्राप्य भोगाननुभवन् सूक्ष्मपदार्थदर्शनादिसामर्थ्यवान् स्वर्गस्थो मानुषो जीवः स उच्यते दिव्यपुरुष इति। यस्तु उक्तदिव्य-पुरुषादपि अतिसूक्ष्मवस्तुदर्शनसमर्थोऽतिशयितशक्तिमान् देवर्ष्यादिजीवः स महापुरुष उच्यते। अस्ति चेदं लक्षणत्रयं द्व्यणुकावयवे परमाणौ। तदंशस्य दिव्यपुरुषग्राह्यत्वाभावात् महा-पुरुषैकग्राह्यत्वाच्च। अत्राद्ये लक्षणे उक्तरीत्या परमाणौ महापुरुषग्राह्यांशसद्भावेन अंशरहितस्यासम्भववारणाय दिव्यपुरुष-ग्राह्येति विशेषणम्। महापुरुषग्राह्यांशवत्त्वेऽपि दिव्यपुरुषग्राह्यत्व-रूपविशेषणाभावाद् विशिष्टाभावः। कदाचिच्चतुरणुकाद्यंशस्य

---

1 अविभागः पराणुता - अनु. २-२-६

यस्य विभिन्नावयवेषु सत्स्वपि तेषां विभागो न कदाऽपि भवितुमर्हति सः परमाणुः इति व्याख्यानात् – न्या.सु.

यतः स्वावयवं विना स्वतन्त्रमनवयवरूपमपकृष्टपरिमाणं नास्ति सः परमाणुः इति यावत् – न्या.सु.

त्र्यणुकादेः दिव्यपुरुषेणाग्रहणसम्भवाच्चतुरणुकादावतिव्याप्तिवारणाय वक्रोक्तिः। त्र्यणुकादेर्दिव्यपुरुषाग्राह्यत्वशङ्कैव नातीव प्रबले-ति द्वितीयलक्षणे वक्रोत्त्यभावः। तृतीयलक्षणे चतुरणुकादौ महापुरुषग्राह्यांशवत्त्वस्य सद्भावेनातिव्याप्तिवारणाय एकेति विशेषणम्। महापुरुषेतरदिव्यपुरुषादिग्राह्यांशवत्वात् महापुरुषैकग्राह्यांशत्वाभावःसुगम एव। तदुक्तम् –

चरमस्तु विशेषाणामनेकासंयुतस्तु यः।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥[1]

मनुष्या देवलोकेऽपि विशेषेणैव दर्शने।
अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः ॥

चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा।
परमाणुः स विज्ञेयः कणादाद्या निरंशिनम् ॥

अनन्तांशयुतत्वेऽपि यं ब्रूयुः भ्रान्तिदर्शनात्।
ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि।
अनन्तत्वाद् विवेकार्थमस्योक्ता परमाणुता ॥[2] इति।

[3]अनेकैरंशैरासमन्तात् संयुतः अनेकासंयुत इत्यर्थः।

---

1 - भागवते ३-१२-१

2 – (भागवततात्पर्योदाहृतमहातत्वविवेकवाक्यानि ३-१२-१)

3 अनेकांशैः आ समन्ताद्युतः - भागवततात्पर्ये ३-१२-१

ननु सर्वेषामंशवत्त्वे सावयवत्वप्राप्त्या कार्यत्वाकार्यत्व-नित्यत्वानित्यत्वव्यवस्था न स्यादिति चेत्। द्विविधो ह्यंशः। एकदेशरूपः उपादानरूपश्चेति। तथाच यत्सोपादानं तत्कार्यमिति व्याप्तिसद्भावेऽपि यदेकदेशवत् तत्कार्यमिति व्याप्तिर्नास्ति। अनन्तांशवत्त्वेनैकदेशवत्सु आकाशादिषु व्यभिचारात्। इह पर-माण्वादिष्वङ्गीक्रियमाणं सांशत्वं न सोपादानत्वरूपमिति सङ्क्षेपः।

## असमवायिकारणलक्षणनिराकरणम्

यच्च 'यत्समवेतं कार्यम्' इत्यादि समवायिकारणलक्षणम्, तदपि वक्ष्यमाणरीत्या समवायस्याप्रामाणिकत्वादयुक्तम्। एतेनासमवायिकारणलक्षणमपि निरस्तम्। द्वित्वसमवायिनिमित्त-कारणयोरतिव्याप्तेश्च। तन्तुपटयोरुत्पन्नद्वित्वं प्रति तन्तुः पटश्च समवायिकारणं तन्तौ पटस्य समवेतत्वात्। समवायिकारणतया तन्तोरिवावधृतसामर्थ्यस्यापि सद्भावात् द्वित्वसमवायिकारणे पटे (असमवायि)लक्षणसद्भावः सुलभः। शरीरात्मोभयवृत्तिद्वित्वं प्रति शरीरात्मनोरुभयोरपि समवायिकारणत्वेनात्मसमवेताया अपेक्षाबुद्धेर्निमित्तकारणत्वेन सामर्थ्यावधारणाच्च द्वित्वं प्रति निमित्तकारणीभूतायामपेक्षाबुद्धौ (असमवायि)लक्षणसम्भवः सुलभः।

न च समवायिकारणप्रत्यासन्नतया सामर्थ्यावधारणं विव-क्षितम्। शरीरात्मनोरुत्पन्नद्वित्वं प्रति अपेक्षाबुद्धेर्द्वित्वसमवायि-

कारणात्मसमवेतत्वेनैव कारणता न गृह्यते। आत्मान्तरस्यापि अपेक्षाबुद्ध्या शरीरात्मनोर्द्वित्वोत्पत्त्यनुपपत्तेः। एवं तन्तु-पटयोरुत्पन्नद्वित्वं प्रति पटस्य न तन्तुप्रत्यासन्नत्वेन सामर्थ्या-वधारणं केवलयोस्तन्तुपटयोर्द्वित्वोत्पत्त्यनुपपत्तेरिति वाच्यम्। धूमज्ञानेऽतिव्याप्तेः। वह्निज्ञानं प्रति समवायिकारणे आत्मनि धूमज्ञानस्यास्ति प्रत्यासन्नता। समवायिकारणप्रत्यासन्नतयैव सामर्थ्यावधारणमपि। नान्यथा। अन्यगतव्याप्यबुद्ध्याऽन्यस्य व्यापकबुद्धिप्रसङ्गात्। स्रक्चन्दनादिदर्शने सर्पादिदर्शने धर्मा-धर्मयोश्चातिव्याप्तिः। तत्रापि सुखदुःखकारणे आत्मनि तेषां प्रत्यासन्नत्वात्। अन्यगतविषयदर्शनादिनाऽन्यगतसुखदुःखयो-रनुत्पत्तेः समवायिकारणप्रत्यासन्नतयैव सामर्थ्यावधारणाच्च।

न चात्मनि यः प्रदेशः व्यापकबुद्ध्यादीन् प्रति समवायिकारणं तस्मिन्नेव प्रदेशे व्याप्यबुद्ध्यादेरसमवायात्, न तेषां समवायि-कारणप्रत्यासन्नतयैव सामर्थ्यावधारणमिति वाच्यम्। यस्मिन्नेव प्रदेशे द्वितीयादिशब्दा उत्पन्नाः, न तस्मिन्नेव प्रदेशे आद्यादिशब्दा समवेता इति तेषां द्वितीयादिशब्दान् प्रति समवायिकारणप्रत्यासन्न-त्वाभावेनाद्यादिशब्देष्वव्याप्तेः।

## समवायनिराकरणम्

यच्चावयवावयव्यादीनामत्यन्तभेदमङ्गीकृत्य तत्सम्बन्धत्वेन

समवायाङ्गीकरणम्, तदप्ययुक्तम् । तन्तुपटादेस्तद्गतरूपादेश्चाभेदेन तत्र सम्बन्धानपेक्षणात् ।

एतेन –" 'इह तन्तुषु पटः' इति प्रत्ययः सम्बन्धपूर्वकः, इहेति प्रत्ययत्वात्, 'इह कुण्डे बदराणि' इति प्रत्ययवत्", "जात्यादिगोचरविशिष्टव्यवहारः सम्बन्धनियतः, भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् 'सघटं भूतलम्' इति व्यवहारवत्", "इह तन्तुषु पटः इति प्रत्यय एतज्जनकसंयोगत्वरहितसम्बन्धजन्यः, इहेति प्रत्ययत्वात्, 'इह भूतले घटाभावः' 'इह कुण्डे बदराणि' इति प्रत्ययवत्", "संयोगत्वमेतत्सम्बन्धव्यावृत्तम्, जातित्वात् गोत्ववत्" इत्यादीनि तार्किकोत्प्रेक्षितान्यनुमानानि निरस्तानि ।

किञ्च, अत्र सर्वत्रानुकूलतर्काभावेनाप्रयोजकता । अर्थान्तरता च । "इह प्रमेयत्वे प्रमेयत्वम् इति प्रत्ययः सम्बन्धपूर्वक इह प्रत्ययत्वात्, प्रमेयत्वे प्रमेयत्वविशिष्टव्यवहारः जातौ प्रमेयत्वविशिष्टव्यवहारो वा सम्बन्धजन्यः विशिष्टव्यवहारत्वात्" "इह शशश्रृङ्गमस्तीति प्रत्ययः एतज्जनकसंयोगत्वरहितसम्बन्धजन्य इहेति प्रत्ययत्वात् 'कुण्डे बदराणि' 'इह भूतले घटाभावः' इति प्रत्ययवत्", "रूपत्वं गुणव्यावृत्तम्, जातित्वात्, गोत्ववत्" इत्याद्याभाससाम्यम् । इह प्रमेयत्वे प्रमेयत्वमित्यादीहप्रत्ययादिषु व्यभिचारः । अपूर्वस्य समवायाख्यपदार्थान्तरस्य कल्पनात् कल्पनागौरवं च ।

कारणात्मसमवेतत्वेनैव कारणता न गृह्यते। आत्मान्तरस्यापि अपेक्षाबुद्ध्या शरीरात्मनोर्द्वित्वोत्पत्त्यनुपपत्तेः। एवं तन्तु-पटयोरुत्पन्नद्वित्वं प्रति पटस्य न तन्तुप्रत्यासन्नत्वेन सामर्थ्या-वधारणं केवलयोस्तन्तुपटयोर्द्वित्वोत्पत्त्यनुपपत्तेरिति वाच्यम्। धूमज्ञानेऽतिव्याप्तेः। वह्निज्ञानं प्रति समवायिकारणे आत्मनि धूमज्ञानस्यास्ति प्रत्यासन्नता। समवायिकारणप्रत्यासन्नतयैव सामर्थ्यावधारणमपि। नान्यथा। अन्यगतव्याप्यबुद्ध्याऽन्यस्य व्यापकबुद्धिप्रसङ्गात्। स्रक्चन्दनादिदर्शने सर्पादिदर्शने धर्मा-धर्मयोश्चातिव्याप्तिः। तत्रापि सुखदुःखकारणे आत्मनि तेषां प्रत्यासन्नत्वात्। अन्यगतविषयदर्शनादिनाऽन्यगतसुखदुःखयो-रनुत्पत्तेः समवायिकारणप्रत्यासन्नतयैव सामर्थ्यावधारणाच्च।

न चात्मनि यः प्रदेशः व्यापकबुद्ध्यादीन् प्रति समवायिकारणं तस्मिन्नेव प्रदेशे व्याप्यबुद्ध्यादेरसमवायात्, न तेषां समवायि-कारणप्रत्यासन्नतयैव सामर्थ्यावधारणमिति वाच्यम्। यस्मिन्नेव प्रदेशे द्वितीयादिशब्दा उत्पन्नाः, न तस्मिन्नेव प्रदेशे आद्यादिशब्दा समवेता इति तेषां द्वितीयादिशब्दान् प्रति समवायिकारणप्रत्यासन्न-त्वाभावेनाद्यादिशब्देष्वव्याप्तेः।

## समवायनिराकरणम्

यच्चावयवावयव्यादीनामत्यन्तभेदमङ्गीकृत्य तत्सम्बन्धत्वेन

समवायाङ्गीकरणम्, तदप्ययुक्तम् । तन्तुपटादेस्तद्गतरूपादेश्चाभेदेन तत्र सम्बन्धानपेक्षणात् ।

एतेन –" 'इह तन्तुषु पटः' इति प्रत्ययः सम्बन्धपूर्वकः, इहेति प्रत्ययत्वात्, 'इह कुण्डे बदराणि' इति प्रत्ययवत्", "जात्यादिगोचरविशिष्टव्यवहारः सम्बन्धनियतः, भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् 'सघटं भूतलम्' इति व्यवहारवत्", "इह तन्तुषु पटः इति प्रत्यय एतज्जनकसंयोगत्वरहितसम्बन्धजन्यः, इहेति प्रत्ययत्वात्, 'इह भूतले घटाभावः' 'इह कुण्डे बदराणि' इति प्रत्ययवत्", "संयोगत्वमेतत्सम्बन्धव्यावृत्तम्, जातित्वात् गोत्ववत्" इत्यादीनि तार्किकोत्प्रेक्षितान्यनुमानानि निरस्तानि ।

किञ्च, अत्र सर्वत्रानुकूलतर्काभावेनाप्रयोजकता । अर्थान्तरता च । "इह प्रमेयत्वे प्रमेयत्वम् इति प्रत्ययः सम्बन्धपूर्वक इह प्रत्ययत्वात्, प्रमेयत्वे प्रमेयत्वविशिष्टव्यवहारः जातौ प्रमेयत्वविशिष्टव्यवहारो वा सम्बन्धजन्यः विशिष्टव्यवहारत्वात्" "इह शशशृङ्गमस्तीति प्रत्ययः एतज्जनकसंयोगत्वरहितसम्बन्धजन्य इहेति प्रत्ययत्वात् 'कुण्डे बदराणि' 'इह भूतले घटाभावः' इति प्रत्ययवत्", "रूपत्वं गुणव्यावृत्तम्, जातित्वात्, गोत्ववत्" इत्याद्याभाससाम्यम् । इह प्रमेयत्वे प्रमेयत्वमित्यादीहप्रत्ययादिषु व्यभिचारः । अपूर्वस्य समवायाख्यपदार्थान्तरस्य कल्पनात् कल्पनागौरवं च ।

ननु – द्रव्यादयः पदार्थाः सामान्यान्ताः त्वयाऽप्यङ्गीकृताः। तत्र गुणादीनां गुण्याद्यभेदमङ्गीकृत्य अपर्यायशब्दवाच्यत्वादि-भेदकार्यनिर्वाहाय अपूर्वो विशेषोऽङ्गीकार्यः। मया तु गुणादे-र्गुण्यादिभेदमङ्गीकृत्य विशिष्टव्यवहारनिर्वाहाय अपूर्वः सम-वायोऽङ्गीक्रियते। तत्र कोऽवसरः कल्पनागौरवस्य - इति चेत्। समवाये तावदवयवनिष्ठत्वमस्तित्वमभिधेयत्वं चेत्यादिधर्मजात-मङ्गीकार्यम्। 'समवायोऽवयवनिष्ठोऽस्त्यभिधेयश्च' इत्यादि-प्रतीतेः। अवयवनिष्ठत्वादिधर्मजातस्य धर्मिणा समवायेन सह सम्बन्धान्तराङ्गीकारेणानवस्थाद्यापत्त्या स्वयमेव सम्बन्धः स्व-निर्वाहकश्चेत्याद्यङ्गीकार्यम्। उक्तप्रमाणानामप्रयोजकत्वादिना दूषि -तत्वात् प्रमाणं विनैव समवायोऽभ्युपगन्तव्यश्च।

किञ्च, अवयवनिष्ठत्वादिधर्मजातमनवस्थाभयेन न भिन्नं किन्त्वभिन्नम्। तत्र चाधाराधेयभावनिर्वाहाय वस्तुस्वभावाख्यो विशेषोऽङ्गीकार्यः। तस्याप्युक्तरीत्या विशेषविशेषिभावादिनिर्वाहाय स्वनिर्वाहकत्वमङ्गीकार्यम्। 'घटस्य स्वरूपम्' इत्यादिव्यवहारा-नुपपत्तिरेव विशेषस्वरूपे प्रमाणमिति च अङ्गीकार्यम्। अङ्गीकृतश्च नित्यद्रव्येषु परस्परव्यावृत्तिसिद्धये व्यावर्तकत्वादिरूपो विशेषः। अन्यथा पार्थिवपरमाणुगतविशेषस्याप्यपरमाणुगतविशेषाद् भेदो न स्यात्। तथाच कथं मयाऽभिहितो विशेषोऽपूर्वः स्यात्। त्वयाऽप्युक्तरीत्याऽङ्गीकृतत्वात्। कथं च समवायो अपूर्वो न

स्यात्। अनन्यथासिद्धप्रयोजनाभावेन तस्य मया क्वापि अङ्गीकर्तुमशक्यत्वात्। 'इह तन्तुषु पटः' इत्यादेर्व्यवहारमात्रत्वेन प्रत्ययत्वाभावात्। तस्य चौपचारिकत्वोपपत्तेः। तथाचोभय-सम्प्रतिपन्नविशेषादेव सर्वसामञ्जस्योपपत्तावप्रामाणिकं समवाय-मङ्गीकृत्य तस्य च स्वनिर्वाहकत्वनित्यत्वैकत्वाद्यङ्गीकारे कथं कल्पनागौरवं न स्यात्।

## समवायैकत्वनिरासः

किञ्च समवायस्यैकत्वे सर्वानुमानोच्छेदप्रसङ्गः(*)।

(*) तथाहि अस्ति तावदौपाधिकं विशिष्टमुपलक्षितमिति वस्तुत्रयं भ्रामकः कर्ता, वक्ता देवदत्तः, नीलमुत्पलम्, अग्निमान् पर्वतः, काकवद् देवदत्तगृह-मित्यादिप्रतीतेः। तत्रोपाधिना क्रियमाणमौपाधिकं, विशेषणेन क्रियमाणं विशिष्टम्, उपलक्षणेन क्रियमाणमुपलक्षितम्। उपाधिविशेषणयोः न कोपि भेदः व्यावर्तकत्वाविशेषादिति चेत्। स्वान्यकालेपि व्यावृत्तिबोधकत्वमुपाधित्वं स्वकाल एव व्यावृत्तिबोधकत्वं विशेषणमिति तयोर्भेदः। पचनाद्युपाधयो हि स्वान्यकालेऽपि पुरुषं व्यावर्तयन्ति पाकादेरुपरतेपि पाचकादिव्यवहारदर्शनात्। नचैवं नीलाग्न्यादि विशेषणानि । नीलाग्न्यादिविनाशेप्युत्पलपर्वतादीन् न व्यावर्तयन्ति। नीलादिविनाशे नीलमुत्पलं, पर्वतो अग्निमान् इत्यादि व्यवहारादर्शनात्। नचैवमुपाध्युपलक्षणयोः भेदानुपपत्तिरुपलक्षणस्याकाशादेः स्वान्यकालेऽपि व्यावर्तकत्वदर्शनादिति वाच्यम्। स्वप्रत्याय्यव्यावृत्ति-व्यधिकरणत्वे सति व्यावर्तकत्वमुपलक्षणमित्यङ्गीकारात्। नचास्य काकादा-वव्याप्तिः शङ्कनीया। गृहोपरिप्रदेशस्थस्यापि काकस्य व्यावर्तकत्वदर्शनेन

स्वप्रत्याय्यव्यावृत्त्यधिकरणगृहवृत्तित्वनियमाभावेन तस्य तत्र सत्वात्। यत्तु गृहस्थितमेव काकादि व्यावर्तकं तत्र पचनादिवदुपाधिरेव नोपलक्षणमित्यदोषः। अत एव विशेषणोपलक्षणयोः भेदाभाव इति निरस्तः। समानाधिकरणत्वे सति व्यावर्तकं विशेषणं यथोत्पलस्य नीलरूपं, पर्वतस्य चाग्निः। व्यधिरकणं तु व्यावर्तकमुपलक्षणं यथा नीलरूपगतं नीलत्वमुत्पलस्य।

अन्ये तु कार्यप्रवेशाप्रवेशाभ्यां विशषेणोपलक्षणयोर्भेदः यथा 'लम्बकर्णमानय, चित्रगुमानय' इति। शब्दसामानाधिकरण्यवैय्यधिकरण्याभ्यां वा भेदः यथा दण्डी देवदत्तो जटाभिस्तापसः इति। व्यवच्छित्तिसमये सत्वासत्वाभ्यां वा भेदः यथा 'दण्डी देवदत्तः, काकवद्देवदत्तगृहम्' इत्याहुः।

तदेतद्वस्तुत्रयं द्विविधम्। यावद्विशेष्यभावी अयावद्विशेष्यभावी चेति। तत्राद्यं यथा। 'ईश्वरः स्रष्टा ज्ञानी जगन्नाथश्च' इत्यादौ। स्रष्टादेरुपहितादिकस्य यावदीश्वरभावित्वात्। सृष्टिज्ञानजगत्प्रवाहानामुपाधिविशेषणोपलक्षणानां नित्यत्वात्। द्वितीयं यथा – 'पाचको देवदत्तः' 'नीलमुत्पलम्' 'काकवद् देवदत्तगृहम्' इत्यादि। नच पचननीलरूपकाकानां यावद्विशेष्यमवस्थानम्। सत्येव देवदत्तादौ पचनादीनां विनाशात्। तत्र यावद्विशेष्यभाव्युपहितादिकं विशेष्येणात्यन्ताभिन्नम्। नचेश्वरः सृष्ट्याद्युपाधिपुरुषतत्सम्बन्धेभ्यो वा ज्ञानपुरुष- तत्सम्बन्धेभ्यो वा। जगत्पुरुषतत्सम्बन्धेभ्यो वातिरिक्तः श्रूयते। अन्यथोपाधिविशिष्टोपलक्षितानां रूप्याद्यन्तर्भावासम्भवात् पदार्थषट्त्व-नियमासम्भवः। द्वितीयं तु भिन्नाभिन्नं नत्वत्यन्ताभिन्नमेव। अनुभवाभ्युपगमोप-पत्तिविरुद्धत्वात्। नहि पाचकादिः अग्निमदादिः काकवदादिर्वा पचनादिक्रियारहितोनुभूयते। नच योग्यस्याननुभवे सत्वं नि...ति। अतिरिक्तत्वे च द्रव्याद्यन्तर्भावासम्भवात्। षट्पदार्थातिरेकप्रसङ्गेनाभ्युपगमविरोधः। यदि च अनतिरिक्तं स्यात् तदा 'पाचकमानय' इत्यादौ पुरुषाद्यानयनं न

तथा हि – 'पर्वतोऽग्निमान्' इत्यादौ पर्वतवह्निसंयोगानां प्रत्येकं प्रत्यक्षसिद्धत्वेन सिसाधयिषाविषयत्वं नास्ति। यस्तु पर्वत एव वह्निसंयोगसम्बन्धात्मकः समवायः, सोऽपि घटादौ रूपादिसमवायस्य प्रत्यक्षेण निश्चितत्वात् निश्चित एव[1]। तस्य चैकत्वाभ्युपगमेन भेदाभावात्।

## समवायनित्यत्वनिरासः

एवं समवायनित्यत्वमनुपपन्नम्। परमाणुषु परमाणुद्वय-संयोगसमवायस्य सत्वेन सर्वदा कार्योत्पत्तिप्रसङ्गात्।

किञ्च, [2]प्रागसतः सत्तासमवायो जनिरिति तार्किकाणां जनिलक्षणम्। तत्र समवायलक्षणा जनिः प्राक्कुलालव्यापारादस्तीति घटोत्पत्त्यर्था कुलालकृतिर्व्यर्था स्यात्। अथ परमाणुगतस्य रूपादिसमवायस्य सत्तासमवायस्य च नित्यत्वेऽपि ताभ्यां पर-माणुद्वयसंयोगसमवायः कुलालव्यापारात् प्रागसतो घटस्य

---

1 भूधरस्याग्निसंयोगो यदि षष्ठ्यर्थ एव कः ।
समवायो यदि ह्यस्य चैकत्वात्सिद्धसाधनम्॥ अनु. २-२-६

2 एवमेवासतः सत्ता समवायो जनिर्मता।
तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम्॥ - अनु. २-२-६

---

कार्यमित्युपपत्तिविरोधः। तस्माद् यथा संयोगविशेषसचिवास्तन्तवः पटाकारेण परिणमन्त इत्येव न्याय्यम्। तथाच विशिष्टादिसाध्यकमनुमानं समवायाभ्युपगमे अनुपपन्नं स्यात्। तथा हि – पर्वतो वह्निमान् (खपाठः)

सत्तासमवायश्च भिन्न इति चेन्न। समवायैक्यव्याघातात्। समवास्यैकत्वं हि न सङ्ख्याविशेषः। निर्गुणत्वात्। किन्तु अभेद एव। न च भेदाभेदौ क्वापि परेणाङ्गीकृतौ। तस्मात् समवाये अभेदस्याप्यङ्गीकृतौ तद्विरुद्धो भेदो नाङ्गीकर्तुमुचितः।

ननु विरुद्धाभिमतयोरविरोधोऽपि कालभेदात्, देशभेदात्, व्यक्तिभेदात्, प्रकारभेदाच्च दृष्टः। इदानीं घटवति कालान्तरे घटाभावस्य, एकस्मिन्नेव काले घटवतो देशान्तरे घटाभावस्य, एकस्मिन्नेव देशे काले घटवति भूतले घटान्तराभावस्य, नील-घटसद्भावेऽपि पीतघटाभावस्य चानुभवात्। तत्र तावत् समवाये यद्यप्यभेदभेदयोर्नाद्यं विधात्रयं सम्भवति। नित्यत्वैकत्वयो-र्व्याघातात्। तथाऽपि चतुर्था विधा सम्भवति। स्वाभाविकत्वौ-पाधिकत्वाभ्यां विरोधशान्तिसम्भवात्। न हि स्वाभाविकाभेद औपाधिकभेदेन विरुद्ध्यते। स्वभावतोऽभिन्ने गगने घटमठा-द्यौपाधिकाकाशभेददर्शनात्। समवाये चौपाधिकभेदोऽभ्युपगतः। अभेदस्तु स्वाभाविक एवेति मते कथं व्याघात इति चेत्।

अत्र ब्रूमः – [1]समवायभेद औपाधिकेत्यत्र शैषिके ठकि कृते सति निष्पन्नस्यौपाधिकशब्दस्योपाधिजन्य इति उपाधिगम्य इति वाऽर्थः स्यात्। तत्र समवाये स्वरूपेणाभेदेऽपि, तत्तदवय-

1 उपाधिजन्यं तद्गम्यमिति चौपाधिकं भवेत्।
उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः ॥ अनु-

वावयविगुणगुण्याद्युपाधिना भेदो जायते ज्ञायते वा इत्युक्तं स्यात्। तत्र नाद्यः। उपाधीनां भिन्नत्वेन समवायभेदप्रसङ्गात्। नह्यौपाधिकभेदो नामोपाधीनामेव भेदो न समवायस्येति सम्भवति। ततश्च भेदहेतवः उपाधयोऽनन्ता इति कथं न समवायानन्त्यम्। किञ्च, उपाधिजन्यो भेद इत्युक्ते स्वाभाविकत्वाप्राप्तावपि सत्यत्वप्राप्तेरनिवारणात्, 'भेदो नासन्' 'भेदः सन्' इत्यनयोर्विरोधपरिहारश्च कथं स्यात्। न हि पार्थिवपरमाणौ रूपादयः अग्निसंयोगजा न त्वाप्यपरमाणुरूपादय इव स्वाभाविका इत्येतावता पार्थिवपरमाणौ रूपादेरसत्त्वं सम्भवति। न वा पार्थिवपरमाणुः रूपादिरहितो भवति।

एतेन 'पटे नीलरूपमस्ति, पीतरूपं नास्ति' इत्यनयोरिव समवाये औपाधिको भेदोऽस्ति, स्वाभाविको भेदो नास्तीत्यनयोरविरोधः किं न स्यादिति परास्तम्। रूपगतस्य पीतत्वस्य रूपेऽसत्वप्राप्तावपि पटे रूपस्यासत्वाभाववदिहापि (1)समवाये भेदस्यासत्त्वासिद्ध्या सत्त्वस्यैव प्राप्तौ विरोधापरिहारात्।

नन्वथापि उपाधिनिवृत्तौ तत्कृतो भेदो निवर्तिष्यते। जपाकुसुमसन्निधाननिवृत्तौ लौहित्यनिवृत्तेर्दर्शनात्। तथाच 'शुभ्रः स्फटिकः' इति यथा व्यवह्रियते, एवं भेदनिवृत्तावेकः समवाय

1 स्वाभाविकत्वरूपप्रतियोगितावच्छेदकमात्रस्यौपाधिकभेदे असत्वप्राप्तावपि समवायभेदस्यासत्वाप्राप्त्या सत्वस्यैव प्राप्तौ विरोधापरिहारात्। – क.

इति व्यवह्रियत इति चेन्न। उपाधीनां सर्वदाऽनपायेन भेदस्यापि निवृत्त्यनुपपत्तेः। न हि समवायः सम्बन्धिभिर्विनाऽवतिष्ठते। सम्बन्धत्वव्याघातात्।

एतेन द्वितीयोऽपि निरस्तः। चक्षुर्गम्यस्य घटादेरिव सत्वप्राप्तेः। न चाधिगम्यस्य शुक्तिरूप्यादेः सत्वाभाववदिहापि किं न स्यादिति वाच्यम्। तत्राधिगमस्य विभ्रमत्वात्। इहाप्यधिगमः कुतो न विभ्रम इति चेन्न। सर्वदोपाधिना जायमानस्य विभ्रमविषयत्वानुपपत्तेः।

## सदसत्कार्यत्वसमर्थनम्

[1]एतेन प्रागसतः कार्यस्योत्पत्तिरिति पक्षो निरस्तः। कुलालव्यापारात् प्राक्कार्यस्यासत्वे कुलालस्य तद्विषयव्यापारानुपपत्तेः। न ह्यसद्विषयो व्यापारः सम्भवति। प्रयोजनाभावाच्च। घटादेः सत्वसम्पादनमेव कुलालव्यापारस्य प्रयोजनमिति चेन्न। असतः सत्वकरणानुपपत्तेः। तस्य सत्तासमवायानतिरेकेणोक्तरीत्या व्यापारवैय्यर्थ्यापाताच्च। स्वरूपलाभः कुलालादिव्यापारसाध्य इति चेन्न। असतः स्वरूपलाभानुपपत्तेः। अन्यथा शशविषाणादिस्वरूपलाभार्थं कश्चिद्व्यापारोऽपि स्यात्। [2]स्वरूपलाभ

1 एवमेवासतः सत्ता समवायो जनिर्मता।
तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम्॥ - अनु. २-२-६

2 स्वरूपलाभस्य सत्तासमवायानतिरिक्तस्य जनित्वायोगाच्च – क.

एव जनिरित्यापातेन सत्ता समवायस्य जनित्वायोगाच्च। किञ्च, कार्येण सम्बद्धं कारणं कार्यस्य जनकम्, असम्बद्धं वा। आद्ये असतः सम्बन्धानुपपत्तेः सत्वमङ्गीकार्यम्। न द्वितीयः। असम्बद्धत्वाविशेषेण सर्वस्मात् सर्वसम्भवापत्तेः।

(1)असन्बद्धत्वेऽपि कारणं तदेव करोति यत्र शक्तम्। तथाच घटासम्बद्धमपि दण्डादि शक्तत्वात् घटमेव करोति न पटं तत्राशक्तत्वादिति चेत्। सा शक्तिः शक्यविषया स्यात्, सर्वत्र वा। द्वितीये पूर्वोक्ता अव्यवस्थैव। आद्ये त्वसति शक्ये घटादौ कथं तद्विषया शक्तिः दण्डादौ स्यात्।

किञ्च, तन्तुपटयोस्तावदभेदोऽङ्गीकार्यः। परस्परव्यतिरेकेणानुपलम्भात् इत्याद्यनुमानात्। तथाच प्राग्विद्यमानतन्त्वभिन्नस्य पटस्य न प्रागसत्वं युक्तम्(*)।

---

1 नन्वसम्बद्ध - क.

(*) किञ्च पटः तन्तुभ्यो न भिद्यते तन्तुधर्मत्वात्। यदि भिद्यते तर्हि तद्धर्मो न भवति, यथा गुरुत्वम्। तन्तुपटौ परस्परं न भिद्येत उपादानोपादेयभाववत्त्वात्। ययोरर्थान्तरत्वं न तयोरुपादनोपादेयभावो यथा घटपटयोः। तन्तुपटौ न भिद्येते संयोगरहितत्त्वात् प्राप्तिरहितत्वाच्च। ययोरर्थान्तरत्वं न तयोः संयोगराहित्यं यथा कुण्डबदरयोः। नच हिमवद्विन्ध्ययोः व्यभिचारः। अव्यवहितत्वविशिष्टसंयोगराहित्यस्य हेतूकरणेन विशिष्टहेतुव्यतिरेकस्य तत्रापि सत्वात्। नहि हिमवद्विन्ध्ययोः संयोगराहित्यमव्यवहितत्वविशिष्टं येन विशिष्टव्यतिरेकस्तत्र

तत्रैते प्रयोगाः । 'विमतं प्रागसन्न भवति कृतिविषयत्वात्, न ह्यसतः कारणमस्ति कारणासम्बद्धत्वात्', 'न ह्यसतः केनचित् सम्बन्धोऽस्ति कारणगतशक्त्यविषयत्वात्' इत्याद्याः ।

नन्वसत्वेऽपि प्रयोगाः सन्ति। 'विमतं प्राक् सन्न भवति कृतिविषयत्वात्', 'न हि प्राक् सिद्धं कृतेर्विषयः कृतेरसिद्ध-विषयत्वस्वाभाव्यात्, प्रागनुपलभ्यमानत्वात्, अर्थक्रियासामर्थ्या-भावात्' इत्यादि इति चेत्। कस्येदमनिष्टम्। तर्हि विरोधः कथं परिहरणीय इति चेत्। कार्यस्य हि अवस्थाद्वयम्। कार्यावस्था

स्यात्। अन्यथा गुरुत्वान्तरकार्यस्याग्रहणप्रसङ्गात्। नचेष्टापत्तिः। तुलारोपे सत्यनतिभेदा(?)ग्रहणप्रसङ्गात्। तन्तुर्हि तत्परिमाणः तद्गुरुश्च प्राष्णतृव्यापारात् अनुभूयते। तदनन्तरमपि तुलारोपणादौ तथाविधमेवानुभूयते। तथाच तन्त्व-भिन्नस्य पटस्य न प्रागसत्वं युक्तम्। तन्तोरप्यसत्वापातात्। अत एव 'नष्टाना-मपि वस्तूनां भेदो नैव विनश्यति' इति वचनात् पटधर्मिको घटप्रतियोगिको भेदः पटे विनष्टेऽपि न नश्यति- इत्येतद्युज्यते। अन्यथाऽसत्वमापन्नस्य स्वरूपभेदः कथं युज्यते। तेन पटे विनष्टेऽपि तदुपादानस्य सत्वयोरभेदाच्च। तत्र सन्नित्येव वक्तव्यम्। नन्वेवं कार्यस्योपादानाभेदेन प्रागपि सत्वाङ्गीकारे कुलालव्यापारवैयर्थ्यम्। मैवम्। कार्यस्य ह्यवस्थाद्वयम्। कार्यत्वकारणत्वावस्था चेति। अवयवसंस्थानविशेषात्मकत्वरूपकार्यावस्थामात्रस्य प्रागसत्वमेव। परिणामयोग्यत्वात्मकोपादानावस्थामाप्तस्य प्राक् सत्वमिति पक्षद्वयस्याप्य-भ्युपगमात्। अत एवोक्तानुमानैरसत्वपक्षप्रतिषेधो न विरुद्धः। प्रागुक्तप्रमाणानां कारणात्मना सत्वपरत्वेऽपि कार्यात्मना सत्वपरत्वाभावात्। अत एव कार्यात्मना सत्वपक्षो न युक्तः। (खपाठः)

कारणावस्था चेति। तथाच संस्थानविशेषात्मकत्वं कार्यावस्था। तामाप्तस्य प्रागसत्वमेव। परिणामयोग्यत्वात्मकं कारणावस्था। तामाप्तस्य प्राक् सत्वमेवेति पक्षद्वयस्याभ्युपगमात्।

किञ्च उक्तयुक्तिभिः किं कार्यस्य पूर्वं सत्वासत्वमात्रं साध्यमुत कार्यात्मनाऽपि। आद्ये सिद्धसाधनम्। सदसत्कार्यवादे तयोरप्यङ्गीकृतत्वात्। न द्वितीयः। कुलालव्यापारादिवैयर्थ्य-प्रसङ्गेन कार्यात्मना सत्वसाधनस्य बाधितत्वात्। कार्यात्मना सत्वसाधनस्य चान्याय्यत्वाच्च।

अनेन 'कार्यसम्बद्धमेव कारणं कार्यं जनयति न त्वन्यत्। ततः कार्यात्मनाऽपि सत्वमङ्गीकार्यम्' इत्यादिकोलाहलः प्रत्युक्तः। कार्यात्मना सत्त्वाभावेऽपि कारणात्मना सत्त्वमात्रेण कारणस्य तत्सम्बन्धोपपत्तेः।

एतेन 'असतः कारणत्वं न सम्भवति' इत्येतदपि निरस्तम्। कार्यात्मना सत्त्वाङ्गीकारेऽपि कारणानुपपत्तेः साम्यात्। न हि सत आत्मादेः केनचित् कारणं दृष्टम्। नन्वसतः कथं कर्मत्वम्, सतः कथं कार्यत्वमित्यपि समानम्। असत उत्पत्तौ नरविषाणमुत्पद्येत इति चेत्। नरविषाणात्मकस्योपादानस्याभावेन नोत्पद्यते। अन्यथा सत उत्पत्त्यङ्गीकारेऽपि आत्मनः कुतो नोत्पत्तिरित्यस्य परिहाराभावप्रसङ्गः।

तस्मात् समवायतदेकत्वनित्यत्वादेः प्रागसतः सत्तासमवायो जनिरि- त्यादेश्च प्रमेयस्य साधकाभावात् बाधकसद्भावाच्चोक्त एव पन्था इति समवायवादसङ्क्षेपः। इति **भूतविवेकः।**

## अज्ञानविवेकः

### लक्षणम्

ज्ञाननिवर्त्यत्वे सति भावरूपत्वमज्ञानस्य लक्षणम्। जीव-बन्धकत्वेनाभिमते [1]दुर्गाभिमन्यमाने अविद्यामायाऽज्ञानादि-शब्दवाच्ये तमोगुणे 'दृष्ट्वैव तं मुच्यते नापरेण', [2]'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुत्या ब्रह्मज्ञाननिवर्त्यत्वसम्भवात्। 'लोहितशुक्लकृष्णाम्'[3] इत्यादिश्रुत्या रूपक्रियादिप्रतीतेर्भावत्व-सद्भावाच्च लक्षणसमन्वयः। ब्रह्मज्ञानप्रागभावेऽतिव्याप्तिवारणाय भावपदम्।

---

1 श्रीस्तु विद्या समुद्दिष्टा दुर्गाऽविद्या प्रकीर्तिता।
ते त्वनादी हरेरिच्छानियते सर्वदैव तु ॥
— इति मायावैभवे, भाग.ता.११.११.३

2 तस्याभिध्यानाद्योजनातत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः
- श्वेताश्वतरोपनिषदि १.१०

3 तैत्तिरीयारण्यके १०.१०.१, महानारायणोपनिषदि ९-२, श्वेता-श्वतरोपनिषदि ४.-२

## अज्ञाने प्रमाणानि

नन्वज्ञानसद्भावे न मानं पश्यामः । उदाहृतश्रुतेरन्यपरत्वात् । 'अहमज्ञः, मामन्यं च न जानामि' इत्यादेः प्रत्यक्षस्य ज्ञानाभावविषयत्वोपपत्तेः । उच्यते – 'तद्गुणसारत्वात् तु तद्व्यपदेशः'[1], 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्'[2] इत्यादिना सूत्रकृता जीवस्य ज्ञानानन्दाद्यात्मकत्वं प्रतिपादितम् । तच्चेदानीं नानुभूयत इति चानुभवसिद्धम् ।

एवं स्थिते प्रयोगाः – 'तत् केनचिदावृतं भवितुमर्हति, प्रमितत्वे सत्यनुपलभ्यमानत्वात् । यथा प्रमितो घटः अन्धकारेण', 'ज्ञाता वा जीवः स्वरूपावरणभूतयत्किञ्चिद्धर्मयुक्तः(?), ज्ञातृत्वे सत्यपि स्वरूपाज्ञातृत्वात् । यो ज्ञातृत्वे सति तदज्ञाता स तदावरणयत्किञ्चिद्धर्मवान्[3] । यथा अन्धकारस्थो देवदत्तः घटज्ञानप्रतिबन्धकान्धकारादिना' इत्यादिः ।

न च व्यासङ्गादिनाऽर्थान्तरता । व्यासङ्गाभावदशायामप्यनुपलम्भात् । न ह्यनादौ संसारे क्षणमपि निर्व्यासङ्गो नेति शक्यते वक्तुम् । अतस्तदतिरिक्तं मायाऽविद्याप्रकृतिरित्यादिशब्दाभिधेयम् अनाद्येव किमपि द्रव्यमङ्गीकर्तव्यम् ।

---

1 ब्रह्मसूत्रम् २-३-२९

2 ब्रह्मसूत्रम् २-३-३१

3 धर्मपदमविवक्षितम् । यत्किञ्चिद्वानित्यनेनैवालमिति भाति ।

'अनादिमायया सुप्तः'[1] इत्याद्यागमाश्चात्र सहाया भवन्ति ।

## अज्ञानस्यावरणत्वसमर्थनम्

नन्वनाद्यज्ञानमपि स्वप्रकाशचैतन्यं कथमावृणोति। नहि दीपप्रकाशमन्धकारमावृणोति । किञ्चाज्ञानं जडत्वान्न स्वतः कार्यक्षममिति तस्य कथमावरकत्वं घटते। अत्रोच्यते - यथा सकर्तृकत्वसाधकानुमानेन सिद्ध्यन् ईश्वरः हेतोः पक्षधर्मताबलाद् भूभूधराद्यशेषजगन्निर्माणानुकूलशक्तिज्ञानादिमानेव सिद्ध्यति, नत्वत्र प्रमाणान्तरापेक्षा, तथेहापि प्रतिबन्धकसाधकानुमानेन सिद्ध्यदज्ञानं हेतोः पक्षधर्मताबलात् स्वप्रकाशचैतन्याच्छादनशक्तिमदेव सिद्ध्यति । न तत्र प्रमाणान्तरापेक्षा । यथा वा स्वयमचेनतमयः अयस्कान्तशिलासन्निधानाद् भ्रमति, तथाऽचेतनमप्यज्ञानं [2]'बन्धको भवपाशेन' इति वचनात् स्वनिष्ठभगवत्सन्निधानेन जीवं संसारयति[3] ।

अन्धकारस्त्वनुमाननैरपेक्ष्येण प्रत्यक्षसिद्धः । अज्ञानं

1 माण्डूकोपनिषदि २-८ "अनादिमायया सुप्तः यदा जीवः प्रबुद्ध्यते"

2 बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः ।। – स्कान्दे
–विष्णुतत्वनिर्णयोदाहृतप्रमाणवचनम्

3 यद्यपि जीवचैतन्यं ब्रह्मस्वधर्मप्रकाशात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयतीति
– न्या.सु. जिज्ञासाधिकरणे

तूक्तानुमानादेव। 'अहमज्ञः, मामन्यं च न जानामि' इत्यादि साक्षिसिद्धप्रत्यक्षस्य परेणानङ्गीकारादिति वैषम्यम्।

**अनादेरप्यज्ञानस्य निवृत्त्युपपत्तिः**

नन्वेवमज्ञानमनादिभावरूपं चेद् विनाशि न स्यात्। 'विमत -मज्ञानं न निवर्तते, अनादिभावत्वात्, गगनवत्' इति प्रयोग-सम्भवात्। अत्रोच्यते – अनादेरपि निवृत्तौ बाधकाभावेनाप्रयोजक-मनुमानम्। निवर्तकाभावरूपोपाधिदुष्टं[1] च। 'भूयश्चान्ते विश्व-मायानिवृत्तिः' इति श्रुत्यैव निवर्तकसद्भावप्रतिपादनेन साधना -व्यापकत्वनिश्चयात्। अत एव 'अज्ञानं निवर्तते, निवर्तक-वत्त्वात्' इत्यनुमान(बाधितत्वात्)दुष्टं च।

एतेन 'अज्ञानं निवर्तकशून्यमनादित्वात्' इति निरस्तम्। 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः'[2], 'भूयश्चान्ते विश्व-मायानिवृत्तिः'[3] इत्यादिश्रुत्या बाधात्।

यथा द्व्यणुकादौ पटादाविवोपादाननाशप्रयुक्तनाशायोगेऽपि तत्संयोगनाशप्रयुक्तनाशो द्वितीयप्रकारोऽभ्युपगतः तथाऽनादेर्नाशो तृतीयप्रकारोप्यनुसर्तव्यः। ननु कोऽसौ तृतीयप्रकार इति चेत्। प्रागभावादाविव स्वरूपध्वंसरूपो विनाश इति गृहाण। सादेर्भाव-

---

1 युक्तं

2 आथर्वणोपनिषदि ४-१०

3 श्वेताश्वतरोपनिषदि ४.१०

रूपस्योपादानमात्रत्वापत्तिरूपोपादानगतोत्तरावस्थाविनाशः । [1]अनादेस्तु स्वरूपध्वंस एवेति व्यवस्थोपपत्तेः ।

### अज्ञानस्य प्रातिस्विकत्वनिरूपणम्

नन्वथाप्यावरकमज्ञानं किमेकमुतानेकम्। आद्येऽपि किं सर्वजीवेष्वनुगतमुतैकजीवपर्याप्तम्। नाद्यः। 'भिन्नाश्च भिन्नधर्माश्च'[2] इत्यादिना अनुगतधर्मानङ्गीकारात्। द्वितीये तत् किं समानाधिकरणेनैव ज्ञानेन निवर्तत उत व्यधिकरणज्ञानेनापि। आद्येऽज्ञानाश्रयत्वेनाभिमतजीवस्य यावद् ब्रह्मज्ञानं तावदुत्पन्नज्ञानानामपि संसारित्वं स्यात्। तज्जीवस्य ब्रह्मज्ञानोत्पत्त्यनन्तरमज्ञाननाशेनोत्तरकाले संसारकथोच्छेदप्रसङ्गाच्च। अत एव न द्वितीयः। कृतहानाकृताभ्यागमप्रसङ्गाच्च। न द्वितीयः। गौरवापातादिति चेन्न।

'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ॥[3]'

---

1 अनादेः कीदृशो विनाश इति चेत् । स्वरूपध्वंस एव। – न्या.सु.
अनादेरिति॥ इदं च प्रतिबन्दीमुखेन प्रकृतस्य परं प्रति दूषणाभिधानम्। वस्तुतस्तु स्वमते निरवयवद्रव्याभावात् लिङ्गदेहादिवत् अनाद्यविद्यादेरप्यवयवसंयोगनाशप्रयुक्त एव नाश इति द्रष्टव्यम्। – वाक्यार्थचन्द्रिकायाम्

2 भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपि – अनु.२-२-१२

3 स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः ।
व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तमः- भाग.ता.- महातत्वविवके

इत्यादिना प्रतिजीवमज्ञानद्वयस्य प्रमितत्वेन गौरवस्यादोषत्वात् ।

### अनादित्वपरिष्कारः

ननु किमिदमनादित्वं नाम । किं प्रागभावाप्रतियोगित्वम्, किं वा कारणशून्यत्वम् । आद्येऽपि किं स्वप्रागभावाप्रतियोगित्वम्, किं वाऽन्यप्रागभावाप्रतियोगित्वम्, आहोस्वित् प्रागभावमात्राप्रतियोगित्वं वा । आद्येऽपि किं स्वप्रागभावः [1]प्रसिद्धः, उत न । आद्ये अज्ञानप्रागभावस्य प्रसिद्धत्वात् प्रतियोगित्वमपि तत्र प्रसिद्धमिति कथं तदभावः । न द्वितीयः[2] । स्वप्रागभावाप्रसिद्धौ तत्प्रतियोगित्वाभावस्य दुर्ज्ञानत्वात् । न द्वितीयः[3] । घटस्यापि पटप्रागभावाप्रतियोगित्वेनानादित्वापातात् । तृतीये किं[4] मात्रशब्दः कात्स्न्र्यवाची, उत व्यावृत्तिवाची, अथ आभासानाभाससामान्यवाची । नाद्यः । घटस्य स्वप्रागभावप्रतियोगित्वेऽपि घटा-दिसकलप्रागभावाप्रतियोगित्वेनानादित्वापत्तेः । न द्वितीयः[5] । प्रागभावध्वंसोभयप्रतियोगिनि घटेऽतिव्याप्तिप्रसङ्गात् । न

---

1 प्रमितः - क.

2 स्वप्रागभावाप्रतियोगित्वमिति पक्षः ।

3 अन्यप्रागभावाप्रतियोगित्वमिति पक्षः ।

4 प्रागभावमात्राप्रतियोगित्वमिति पक्षः ।

5 व्यावृत्तिवाचीति पक्षः

तृतीयः[1]। आकाशादिप्रतियोगिकप्रागभावस्यालीकत्वेन प्रागभावसामान्यस्य बाष्पारोपितधूमसामान्यस्येवासत्वात्। द्वितीयेऽपि[2] स्वकारणशून्यत्वम्, अन्यकारणशून्यत्वं वा इत्यादि विकल्प्य तन्निरासप्रकारश्चोह्यः।

अत्रोच्यते - स्वप्रागभावाप्रतियोगित्वमनादित्वमत्र विवक्षितम्। न च तत्पक्षोक्तविकल्पासहत्वदोषप्रसक्तिः। स्वप्रागभावस्याप्रसिद्धस्यैव विवक्षितत्वात्। तत्किं प्रतियोगिनोऽसत्त्वेऽभावोऽपि न स्यादित्यर्थो विवक्षितः, किं वा प्रतियोगिनः असत्त्वे तज्ज्ञानोपायाभावेन प्रतियोगिज्ञानपूर्वकमभावज्ञानं न स्यादिति। नाद्यः। प्रागभावध्वंसयोः प्रतियोगिसत्त्वेन व्याप्तत्वेऽप्यत्यन्ताभावस्य तेन व्याप्त्यभावात्। अत्यन्ताभावो हि प्रत्युत तत्प्रतियोगिनोऽसत्त्वमेवापेक्षते। प्रामाणिकप्रतियोगिकात्यन्ता- भावानङ्गीकारात्। न द्वितीयः। घटादौ स्वप्रागभावप्रतियोगित्वदर्शनेन 'अज्ञानादि स्वप्रागभावप्रतियोगि वस्तुत्वात् घटवत्' इत्याद्यनुमानाभासैः स्वप्रागभावप्रतियोगित्वारोपेणाज्ञाने तदभावप्रतीतिसम्भवात्। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रमात्वस्य गौरवेणाभावज्ञानकारणकोटौ प्रवेशायोगात्[3]। एवं स्वकारणरहितत्वं

---

1 आभासानाभाससामान्यवाचीति पक्षः।

2 प्रथमं विकल्पितकारणशून्यत्वपक्षः।

3 करणतावच्छेदककोटौ प्रवेशाभावात् -क.

स्वोत्पत्तिरहितत्वमित्यादीनि [1]अनादित्वलक्षणानि ऊहनीयानि। एवमेव नित्यत्वमपि स्वध्वंसाप्रतियोगित्वं स्वविनाशराहित्यं वेत्याद्यूहनीयम्। यथोक्तम् –

घटादौ प्रमिता तावत् प्रागभावेन युक्तता।
आरोप्य बुद्धिपूर्वं सा गगनादौ निषिद्ध्यते ॥ इति।

इत्यज्ञानविवेकः।

## तमोविवेकः

### तमसो द्रव्यत्वसमर्थनम्

अथ तमो निरूप्यते। तस्य द्रव्यत्वे खल्वन्ये विप्रतिपद्यन्ते – तमो न द्रव्यम्, अपि तु आलोकाभाव एव। अन्यथा गौरवप्रसङ्गात्[2]। किञ्च तावदयं प्रष्टव्यः। किं तद् द्रव्यं नित्यमजन्यम्, उतानित्यं जन्यम्। नाद्यः। प्रदीपारोपणादिनाऽन्धकारस्य ध्वंसदर्शनात्। तन्नाशेनोत्पत्तिदर्शनाच्च। द्वितीये तदुपादानं वाच्यम्। तत् किं निःस्पर्शद्रव्यम्, उत सस्पर्शद्रव्यम्। नाद्यः। निःस्पर्शद्रव्यस्य द्रव्यान्तरारम्भकत्वादर्शनात्। न द्वितीयः। तमसो निःस्पर्शद्रव्यत्वेन [3]सस्पर्शद्रव्योपादेयत्वासम्भवात्। यो यज्ञा-

---

1 अनादित्वनिर्वचनान्यूह्यानि - क.

2 उद्भूतरूपयावत्तेजोसंसर्गाभावस्यैवान्धकारप्रतीतिविषयत्वोपपत्तौ द्रव्यान्तरकल्पने गौरवप्रसङ्गात्।

3 स्पर्शवद् द्रव्योपादेयत्वायोगात् - क.

तीयः स तज्जातीयोपादेय इति व्याप्तेः। न हि पृथिवीजातीयं घटादि विजातीयजलाद्युपादेयं दृष्टम्। तस्माद् यावदुद्भूतरूपवत्तेजःसंसर्गाभावस्तमः न द्रव्यान्तरम् - इति पूर्वपक्षसङ्क्षेपः।

अत्रोच्यते - तमो निःस्पर्शद्रव्यम्। तदारम्भकतमःसूक्ष्मभागोऽपि निःस्पर्श एव। निःस्पर्शद्रव्यस्य द्रव्यान्तरोपादानत्वादर्शनं त्वप्रयोजकमेव[1]। न हि [2]गुणिप्रत्यक्षं विना गुणप्रत्यक्षं वायोरन्यत्र न दृष्टमित्येतावता प्रमाणविरुद्धस्तद्गत-स्पर्शस्य प्रत्यक्षत्वाभावः स्वीकृतः।

किञ्च, 'नीलं तमश्चलति' इत्यबाधितप्रत्ययबलात् तमसि रूपादिसिद्ध्या द्रव्यत्वसिद्धिः। रामायणे [3]हनुमच्छायायां 'वायुपुत्रानुगामिनी'[4], 'दशयोजनविस्तीर्णा'[5], 'छायायां सङ्गृहीतायाम्'[6] इति च, भागवते 'तमः सुघोरं गगनच्छदं

---

1 विपक्षे बाधकाभावेन स्पर्शवतोऽपि वायोर्नीरूपत्ववत्क्रियावतोऽप्यस्य निःस्पर्शत्वोपपत्तेः। – तर्कताण्डवे

2 न हि रूपादिगुणवतो द्रव्यस्य स्पर्शप्रत्यक्षं - क.

3 वायुपुत्रपदेन भीमभ्रान्तिनिरासायोक्तं हनुमच्छायायामिति ॥ सुन्दरकाण्डे प्रथमसर्गे 'श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी। तस्य सा शुशुभे छाया वितता लवणाम्भसि' – इति न्यायदीपे

4 वाल्मीकीरामायणे सुन्दरकाण्डे १-७६

5 वाल्मीकीरामायणे सुन्दरकाण्डे १-७५

6 छायायां सङ्गृहीतायां चिन्तयामास मारुतिः–वा.रा.सुन्दरकाण्डे१-१८३

महद् विदारयद् भूरितरेण रोचिषा'[1], 'पङ्कभूतं हि तिमिरम्'[2], 'अथ पर्वतभूतं तत्' इत्यादिना च क्रियापरिमाणसङ्ग्रहणचक्रविदार्यत्वकाठिन्यादिना च द्रव्यत्वसिद्धिः। न ह्यभावः क्वचिद् रूपक्रियादिमान् दृष्टः श्रुतो वा।

यद्यपि निःस्पर्शद्रव्येऽपि क्रियादिः काठिन्यादिर्न दृष्टः। तथाऽप्यदृष्टविशेषादिना [3]स्पर्शवज्जलादिद्रव्यान्तरसंयोगादिना वा तदुपपन्नम्। अन्यथा करकादेः [4]जलीयत्वाद्यसिद्धिप्रसङ्गः। अभावे तु द्रव्यान्तरसंयोगाद्यसम्भवेन तदनुपपत्तिरेव।

**लक्षणम्**

लक्षणं तु प्रकाशविरोधित्वे सति भावत्वं वा। निःस्पर्शत्वे सति क्रियावत्त्वं रूपित्वं वा ज्ञातव्यम्।

---

1 मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः।

— भागवते १०-१००-५८

2 ततः कदाचिद्दुःखेन रथमूहुस्तुरङ्गमाः।
अथ पर्वतभूतं तत्तिमिरं समजायत ।
पङ्कभूतं हि तिमिरम् अश्वानां जायतेऽनघ।
तदासाद्य हया राजन् निष्प्रयत्नास्ततः स्थिताः।
ततश्चक्रेण गोविन्दः पाटयामास तत्तमः।। — हरिवंशे।

3 स्पर्शवद्द्रव्यसंयोगादिना - क.

4 जलजातीयत्वा -क

## पृथग्द्रव्यत्वसमर्थनम्

एवं तमसो द्रव्यत्वे सिद्धे तमो न महत् नाप्यहङ्कारः। अहङ्कारोपादानत्वाभावात्, इन्द्रियोपादानत्वाभावाच्च। नापीन्द्रियाणि। ज्ञानादिसाधनत्वाभावाच्च। नापि मात्राः। आकाशाद्यनुपादानत्वात्। नापि भूतानि। शब्दादिमात्राजन्यत्वाभावात्। नाप्य-ज्ञानम्। ज्ञाननिवर्त्यत्वाभावात्। नापि कालादिः रूपादिमत्त्वात् इति परिशेषात् द्रव्यान्तरम्।

## विभागः

तद् द्विविधम्। नित्यमनित्यं च। नित्यं सूक्ष्मरूपम्। अनित्यं कार्यरूपम्। तच्च केवलं प्रकृतिसूक्ष्मैरेवारभ्यते। न तु प्राकृतांशैरुपचीयते। निबिडनिबिडतरत्वादिस्तु द्रव्यान्तरसंयोगौपाधिकः। अत एव न तत्र संसृष्टासंसृष्टत्वविभागः।

## विरोधपरिहारः

'... महानहम्।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥[1]'
'अबग्नीरनभोऽहङ्कृन्महत्तत्वगुणत्रयैः'[2]

---

1 तत्वसङ्ख्याने ९

2 अबग्नीरनभोहङ्कृन्महत्तत्वगुणत्रयैः।
क्रमाद् दशोत्तरैरेतदावृतं परतस्तथा॥
—तात्पर्यनिर्णयोदाहृतआदित्यपुराणवचनम्

इति वचनं न द्रव्येयत्ता परिगणनपरम्। [1] किन्तु, अण्डोपादानत्वस्य दशोत्तरत्वस्य वा परिगणनपरमिति न दोषाय। अन्यथा कालदेशवर्णात्मादीनां तत्रापरिगणनात् तदसिद्धिप्रसङ्ग इति सिद्धान्तसङ्क्षेपः। इति **तमोविवेकः**।

## कालविवेकः (लक्षणम्)

[2]अतीतादिव्यवहारहेतुः कालः। न चेश्वरादावदृष्टादावपि कार्यमात्रहेतुत्वादतिव्याप्तिः। अतीतादिव्यवहारं प्रत्यसाधारणहेतुत्वस्य विवक्षितत्वात्। असाधारण्यं च न प्रकृष्टत्वम्, येन [3]'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इत्यादिना ईश्वरस्य प्रकृष्टकारणत्वात् तद्दोषतादवस्थ्यम्। किन्तु विशेषधर्मेण कार्यविशेषं प्रति हेतुत्वम्। ईश्वरः कार्यमात्रं प्रति ईश्वरत्वादिसाधारणधर्मेणैव हेतुः। न पुनः किञ्चित् कार्यविशेषं प्रति तद्गतविशेषधर्मेण।कालस्य तु कार्यमात्रं प्रति कालत्वरूपसामान्यधर्मेण[4] हेतुत्वेऽपि अतीतादिव्यवहाररूपकार्यविशेषं प्रति अतीतकालत्ववर्तमानकालत्वादिविशेषरूपेणैव हेतुत्वमिति काले लक्षणसमन्वयः।

---

1 अतस्तत्र तमसोऽपरिगणनं - क.

2 आयुर्व्यवस्थापकः कालः – पदार्थसङ्ग्रहे

3 भ.गी. १०-५

4 ०सामान्येन रूपेण -क.

## कालस्वरूपम्

'अतीतादिव्यवहारः किञ्चिदवलम्बनः व्यवहारत्वात् घटादिव्यवहारवत्' इत्यनुमानात् कालस्वरूपसिद्धिः। न च घटादिनाऽर्थान्तरता। वर्तमानघटेऽपि अतीतादिव्यवहारप्रसङ्गात्। यस्तु तस्य घटादेरतीत्वादिघटकः विशेष्यातिरिक्तः स एव कालः। स च क्षणलवाद्यंशोपेतः। क्षणलवादयश्च प्रत्येकमुक्तरीत्या परमाणव इवानन्तांशोपेताः [(1)]उत्पादविनाशशालिनः प्रत्येकं व्यापकाश्च। विभव इति यावत्। विभुत्वं चाग्रे निरूप्यते। क्षणलवादिसमुदायात्मकः कालस्तु अनादिनित्यः। 'इदानीं कालो नास्ति' इत्यादिप्रतीतेर्व्याघातात्। कथं तर्हि क्षणलवादीनां साद्यनित्यत्वं तदात्मकस्य कालस्यानादित्वं वा कथं घटते। न हि साद्यनित्यवृक्षसमुदायात्मकस्य वनस्यानादिनित्यत्वं दृष्टमिति चेत्। द्विविधं ह्यनादिनित्यत्वम्। स्वरूपतः प्रवाहतश्चेति। साद्यनित्यक्षणलवाद्यात्मकस्य कालस्य स्वरूपतो नित्यत्वासम्भवेऽपि [(2)]प्रवाहतोऽनादित्वं नित्यत्वं च युज्यते।

---

1 विशेषाच्चैव कालस्य हरेरिच्छावशाः सदा।
सर्वे निमेषा इति हि श्रुतिरेवाह सादरम्॥ – अनु.
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि - इति श्रुतेः।

2 कालप्रवाह एवैको नित्यो न तु विशेषवान्। - अनुव्याख्यानम्
द्व्यणुर्द्वौ परमाणू स्यात्त्र्यसरेणुस्त्रयः स्मृतः।
त्र्यसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः।

## प्रवाहतोऽनादित्वपरिष्कारः

ननु किमिदं प्रवाहतोऽनादित्वम्। प्रवाहोऽनादिरित्यर्थ इति चेन्न। प्रवाहः किं प्रवाहिभ्यो भिद्यते, उत न। आद्ये प्रवाहिभिन्नः प्रवाहः प्रवाहिभिरुत्पद्यते, उत ज्ञाप्यते। आद्ये प्रवाहिजन्यः प्रवाहः कथमनादिः स्यात्। द्वितीये किं प्रवाहिनां प्रत्येकं ज्ञापकत्वम्, उत मिलितानाम्। नाद्यः। एकैकप्रवाहिदर्शनेऽपि प्रवाहबुद्धिप्रसङ्गात्। न द्वितीयः। तेषामाशुतरविनाशिनां क्रमभाविनां मेलनासम्भवात्। नापि द्वितीयः। सादिप्रवाह्यभिन्नस्य प्रवाहस्यानादित्वायोगात्।

उच्यते। द्वितीय पक्ष एवाश्रीयते। न हि प्रवाहिभ्योऽतिरिक्तः प्रवाहः घटादिभ्यः पट इव दृश्यते। सजातीयानां प्रवाहिणामेव पूर्वापरकालवृत्तित्वेनोपाधिना प्रवाहशब्दार्थत्वात्। दृष्टचरं चैतत्। एकदेशस्थत्वेनोपाधिनाऽनेकवृक्षाणामेव वनशब्दार्थत्वदर्शनात्। यथोक्तम् -

प्रवाह इति गीयन्ते सजातीयाः प्रवाहिणः।
कालेनोपाधिना ग्रस्ता नानावृक्षा वनं यथा ॥– इति।

---

तत्त्रिभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः।
निमेषस्त्रिलवो ज्ञेय आम्नातस्तत्र यः क्षणः।
क्षणान् पञ्च विदुः काष्ठां लघुता दश पञ्च च।
लघूनि वै समाम्नाता दश पञ्च च नाडिका।
ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम्। – तृतीयस्कन्धभागवते

तेषां चानादित्वं एकप्रवाहमध्यपतितानेकप्रवाहिप्रतियोगिक-प्रागभावावच्छिन्नकालावृत्तित्वानधिकरणप्रध्वंसप्रतियोगिप्रवाहि-त्वम्। एकप्रवाहमध्यपतिता ये अनेके प्रवाहिणः तत्प्रतियोगिकाः ये प्रागभावाः तदवच्छिन्नो यः कालः तदवृत्तित्वानधिकरणो यो ध्वंसः तत्प्रतियोगिप्रवाहित्वमित्यर्थः। तथाच -

एकप्रवाहमध्यपतितानेककालप्रागभावावच्छिन्नसर्गाद्यक्षण-वृत्तिकालध्वंसप्रतियोगित्वं कालस्यास्ति। सर्गाद्यक्षणपूर्वक्षणेषु कालसद्भावात्। न हीदानीं[1] कालो नास्तीति शक्यते वक्तुम्। व्याहतत्वात्। घटादौ घटादिप्रवाहमध्यपतितघटप्रागभावाव-च्छिन्नसर्गाद्यक्षणकालवृत्तिध्वंसो न घटध्वंसः। सर्गाद्यक्षणपूर्व-क्षणेषु घटस्याभावात्। न च तदभावे तद्ध्वंसो युज्यते। न हि प्रलयकाले घटोऽस्ति। सकलकार्यध्वंसरूपत्वात् तस्य। अत एव तत्प्रतियोगित्वाभाव इति न लक्षणस्यास्य तत्रातिव्याप्तिः।

यद्यपि कामकर्मादेः प्रवाहतोऽनादित्वं तत्र तत्र व्यवह्रियत इति तत्सामान्याद् घटादेरपि तद्वाच्यम्। तथाऽपि नित्यानित्यं त्रिधा प्रोक्तम् -

नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ॥[२]

1 तदानीं(?)

2 तत्वसङ्ख्याने - ८

इत्यत्र टीकाकृतोक्तं 'एकदेशेनोत्पत्तिविनाशवत्त्वे सति एकदेशेन तदभावरूपं कालमात्रनिष्ठं प्रवाहतोऽनादित्वम्' अत्र विवक्षितम्। न चेदं कामकर्मादिसाधारणम्। अत एव प्रागभावावच्छिन्नकालवृत्तिध्वंसाप्रतियोगित्वेन कामकर्मादेर्व्युदासः। घटादेः सजातीयघटप्रवाहमध्यपतितानेकघटप्रागभावावच्छिन्नसर्गद्वितीयक्षणादिरूपकालवृत्तित्वेन तद्ध्वंसस्यापि सम्भवेन पुनरति-व्याप्तिवारणाय नञ्द्वयोपादानम्। उक्तघटध्वंसस्य सर्गाऽद्यक्षणमादाय प्रागभावावच्छिन्नकालावृत्तित्वसद्भावाद् भवति तेन तद्व्युदासः।

ननु पूर्वसर्गीयघटध्वंसस्योक्तप्रागभावावच्छिन्नैतत्सर्गाद्यक्षणवृत्तित्वात् घटेऽतिप्रसङ्गः। मैवम्। एकप्रवाहमध्यपतितत्वस्य ध्वंसविशेषणत्वस्यापि स्वीकारात्। पूर्वसर्गीयध्वंसस्तु नैतत्सर्गीयप्रवाहमध्यपतितः। न चैवं काले प्रवाहद्वैविध्यमस्ति। प्रलयेऽपि कालपरम्पराया [1]विच्छेदाभावेन तत्प्रवाहद्वैविध्यकल्पनासम्भवादिति[2] न कश्चिद्दोषः।

---

1 सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः।
उवास तस्मिन् सलिले पदे स्वे यथातलो दारुणिरुद्धवीर्यः॥
–तृतीयस्कन्धभागवते प्रलयकालेऽपि कालसृष्टिरुक्ता।

2 कल्पनाया असम्भवादित्यर्थे समासः(?)

## कालस्याखण्डत्वनिराकरणम्

अन्ये तु– "एक एवाखण्डः कालः स्वतः। न तु क्षणलवाद्यनन्तांशोपेतः। किन्तु सूर्यपरिस्पन्दाद्युपाधिनोत्पन्नांशभेदेन क्षण -लवादिसञ्ज्ञा लभते। अन्यथा सावयववत्त्वेनानित्यत्वप्राप्तेः" – इत्याहुः। तन्न। क्षणलवाद्यतिरिक्ताखण्डकाले माना- भावात्। प्रत्युतोक्तरीत्या क्षणलवादीनां [१]साक्षिवेद्यत्वेन स्वाभाविकत्वावगमात्। उपाधेः[२] स्वतो विद्यमानभेदज्ञापकत्वेऽपि भेदोत्पादकत्वं नास्ति, अन्योन्याश्रयादिति वक्ष्यमाणत्वाच्च।

### विभागः

तम इव कालोऽपि शुद्धप्रकृति[३]सूक्ष्मैरेवारब्धत्वान्न संसृष्टासंसृष्टविभागवान्। शिष्टमनुपदमेव वक्ष्यते। इति **कालविवेकः।**

---

1 कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रकीर्तितः – अनु.२-२-६

2 विद्यमानस्य भेदस्य ज्ञापको नैव कारकः – उपाधिखण्डने

3 अनित्यत्वे तत्कारणं वाच्यमिति चेत्। सत्यम्। उपादानं तु प्रकृतिरेव।
–न्या.सु. २-२-६

---

(*)रूपरहितत्वे सति नित्यत्वे सति अप्रतिपादकत्वं देशस्य लक्षणम्[१]। अत्र रूपरहितत्वेत्यंशेनेश्वरव्यावृत्तिः। रुग्मवर्णो रमेशः इत्यादिना तस्य रूपवत्त्वात्। नित्यत्वेन क्षणलवादिकालव्यावृत्तिः। तस्योक्तरीत्या ध्वंसप्रतियोगित्वात्। अप्रतिपादकत्वेन वर्णात्मकशब्दव्यावृत्तिः। तस्यार्थप्रतिपादकत्वमग्रे

---

1 अस्य लक्षणस्याभावादिष्वतिव्याप्तिः स्यात्। अत्रेति व्यवहारालम्बनो देश इत्येव सुवचम्।

## देशविवेकः

### लक्षणम्(*)

(१)अव्याकृताकाशः दिगित्यादिशब्दाभिधेयो देशः। स च भूताकाशाद् भिन्न(२) एव। विभुर्नित्यः अनन्तांशवान्।

### विभुत्वपरिष्कारः

ननु किमिदं विभुत्वम्। सर्वगतत्वमुत सकलमूर्तद्रव्य-संयोगित्वम्। नाद्यः। सर्वगतत्वं हि सर्वेषु विद्यमानत्वम्। न चेदमाकाशे सम्भवति। घटादीनां मध्यमपरिमाणत्वेन तद्वृत्तेराकाशस्य तत्परिमाणप्राप्तेः। 'विमतं मध्यमपरिमाणं तद्वृत्तित्वात्, यद् यद्वृत्ति तत् तत्परिमाणम्। यथा प्रादेशपरिमाणभूतलादि-

1 सृष्टिप्रलययोः विकारशून्या दिगव्याकृताकाशम् – पदार्थसङ्ग्रहे

2 अव्याकृताकाशं हि गगनं साक्षिगोचरम्।
प्रदेश इति विज्ञेयो नित्यं नोत्पद्यते हि तत् – अनु.

वक्ष्यते।(?) ननु आकाशः दिक् देश इति चानर्थान्तरम्। तथाच "आकाशो नीलिमोदेति" इति श्रुत्या जन्यत्वे सिद्धे जन्यभावस्य ध्वंसप्रतियोगित्वनियमेन चाकाशात्मकदेशे लक्षणमिदं कथमुपपादनीयम्। उच्यते – भूताकाशः अव्याकृताकाशश्चेति द्विविधो ह्याकाशः। प्रमाणं च – "आकाशो नीलिमोदेति", "आकाशवत् सर्वगतश्च नित्यः" इत्यादिवाक्यद्वयान्यथानुपपत्तिरेव। किञ्च महाप्रळये सर्वकार्याणां विनाशनियमेन भूताकाशस्यापि विनष्टत्वात्। अवकाशाभावप्रसङ्गः। नचेष्टापत्तिः। तत्र देशे देशाभावस्य व्याहतत्वात्। (ख-पाठः)

वृत्तिघटादिः' - इति प्रयोगसम्भवात्। न चेष्टापत्तिः। नित्यत्वोक्ति -विरोधात्। 'विमतमनित्यं मध्यमपरिमाणत्वात् घटादिवत्' इति प्रयोगात्। न द्वितीयः। कालभेदेनानेकमूर्तद्रव्यसंयोगस्य घटादि-साधारण्येन एकस्मिन्नेव कालेऽनेकमूर्तद्रव्यसंयोगस्य विरुद्धत्वे-नाकाशेऽसम्भवात्।' न ह्येकमेव वस्तु युगपदेवानेकवस्तुभिः सम्बद्धुं शक्यमिति चेत्।

अत्रोच्यते- अत्राद्यपक्षो निरवद्यः। तथा हि- अणुत्वमहत्त्व-मध्यमपरिमाणत्वदीनामा[1]पेक्षिकाणां सर्वत्र सम्भवान्न क्वचिद् [2]विश्रान्तिः। अत एव परमाण्वाकाशादीनामंशा अनन्ताः। न चैवमुत्पादविनाशप्राप्तिः 'विमतम् उत्पादविनाशि सांशत्वात् घटादिवत्' इति प्रयोगसम्भवादिति वाच्यम्। अंशो हि द्विविधः। उपादानावयवादिपर्याय एकः, एकदेशात्मकोऽपरः। तत्राद्यस्यो-त्पादविनाशव्याप्तत्वेऽपि द्वितीयस्य सांशेषु जीवेषु व्याप्त्यभावात्। अत एव चानुमानं सोपादानत्वोपाधिग्रस्तम्। 'इह पक्षी' 'नेह पक्षी' इत्यादिप्रयोगप्रत्ययाभ्यामंशस्याकाशे दुर्वारत्वात् पक्षे (सांशत्ववति सोपादानत्वाभावात्) साधनाव्यापकता। पटस्य तन्तुरूपोपादानभूतोंऽश इति प्रत्ययप्रयोगाभ्यामंशद्वैविध्यस्य दुर्वारत्वाच्च इत्यादि प्रपञ्चितमन्यत्र।[3]

1 अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया – अनु.

2 महत्त्वाणुत्वयोर्नैव विश्रान्तिरुपलभ्यते – अनु २-२-६

3 किञ्चोत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधोऽप्याकाशद्वैतमवगमयति।न्या.सु.२-३-१

अपिच मध्यमपरिमाणत्वाद्यापादानं किं कृत्स्नस्याकाशस्य, उत तदंशस्य। नाद्यः। कृत्स्नस्याकाशस्य सर्वान्तर्गतत्वगर्भसर्ववृत्तित्वाभावेनापादकासिद्धेः। न द्वितीयः। आपाद्यस्यानिष्टत्वासिद्धेः। आपेक्षिकमध्यमपरिमाणस्य परमाण्वादावपि सद्भावेनानित्यत्वव्याप्त्यसिद्धेः तदापादनासम्भवात्। परमाणुर्हि स्वांशापेक्षया नाणुः। स्वकार्यद्व्यणुकापेक्षया न महांश्च। अणुत्वमहत्त्वयोरभावे सति परिमाणवत्त्वं मध्यमपरिमाणवत्त्वमेव नान्यदित्युक्तमधस्तात्। अनित्यत्वे विनाशकारणसामग्रीसद्भावस्य प्रयोजकत्वेन मध्यमपरिमाणादेरप्रयोजकत्वात् सोपाधिकं चानुमानम्। 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिना नित्यत्वावगमात् कालात्ययापदिष्टञ्च।

अत एव द्वितीयपक्षोऽपि निरवद्यः। यथा एक एव घटः प्राच्येन पुरुषेण युगपदेव प्राग्भावप्रत्यग्भावरूपांशभेदेनानेकद्रव्यसंयुक्तः, तथैकोऽप्याकाशः स्वांशैरनेकद्रव्यसंयुक्त इत्यङ्गीकारे बाधकाभावात्। तथा च सर्वगतत्वं सर्वमूर्तद्रव्यसंयोगित्वं वा विभुत्वमिति निर्वचनं सुस्थम्। लक्षणं तु अन्यानन्तर्गतत्वरूपं परममहत्परिमाणवत्त्वम्। यद्यपीदमाकाशकालप्रकृतीश्वरेषु चतुर्ष्व -प्यस्ति। तथाऽपि 'कालाद्यन्यत्वे सति' इति विशेषणान्न दोषः।

**आकाशांशानां स्वाभाविकत्वसमर्थनम्**

यत्तु कश्चिदाह – 'आकाशे भेदो नास्त्येव' 'इह पक्षी' 'नेह

पक्षी' इत्यादिप्रतीतिगोचरस्तु न स्वाभाविको भेदः। किन्तु घटमठाद्युपाधिकृत एव- इत्यादि। तदयुक्तम्। तथा हि – घटाकाशभेदो घटेन, मठाकाशभेदो मठेन, प्राकाराकाशभेदः प्राकारेण, उपवनाकाशभेद उपवनेन, गिर्याकाशभेदो गिरिणा एवं तत्तदाकाशभेदः तत्तदुपाधिना कृत इत्युक्तं स्यात्। तत्रोपाधेः क्वचिदप्यनवस्थितस्य भेदकत्वायोगेन तस्याश्रयगवेषणे, न कृत्स्नाकाशस्तदाश्रयः। निरुपाधिकाकाशस्यास्वाभाविकत्वप्रसङ्गात्[1]। नाप्याकाशैकदेशः। तस्य स्वाभाविकत्वे प्रतिज्ञाव्याघातात्। उपाधिकृत आकाशैकदेशे स्वयं स्थित्वा स्वावच्छिन्नाकाशभेदं जनयतीत्येष एव पक्षोऽवशिष्यते।

तथा च घटो मठाकाशे स्थित्वा घटाकाशं जनयन्, स्वस्यावस्थानसिद्ध्यर्थं घटः स्वयमेव मठाकाशं जनयति, उत मठो- पाधिजन्यमठाकाशे स्वयं स्थित्वा घटाकाशं करोति। मठस्तु घटाकाशे स्थित्वा मठाकाशं करोति, किं वा मठः स्वान्येन प्राकारोपाधिना कृते प्राकाराकाशे स्थित्वा मठाकाशं करोति, मठाकाशे स्थित्वा घटः घटाकाशं करोति, तस्मिन्नेव घटाकाशे स्थित्वा प्राकराख्य उपाधिः प्राकाराकाशं करोति? आहोस्वित् घटाख्य उपाधिः मठाख्योपाध्यन्तरकृते मठाकाशे स्थित्वा, मठस्तूपाध्यन्तरकृते प्राकाराकाशे स्थित्वा, प्राकरास्तूप-

1 कृत्स्नाकाशस्योपाधिग्रस्तत्वे उपाधिसम्बन्धरहितः स्वाभाविक आकाश एव न स्यादित्याशयः(?)

वनाख्योपाध्यन्तरकृते उपवनाकाशे, उपवनं चोपाध्यन्तरेण गिरिणा कृते गिर्याकाशे स्थित्वेत्येवं तत्र उपाध्यन्तरप्रदेशेषु स्थित्वा स्वस्वावच्छिन्नाकाशभेदान् कुर्वन्ति। नाद्यः। आत्माश्रयात्। न द्वितीयः। अन्योन्याश्रयात्। न तृतीयः। चक्रकाश्रयात्। न चतुर्थः। अनवस्थानात्। यस्मादेवमौपाधिकभेदो दृष्टः तस्मात् स्वाभाविकभेदोऽभ्युपगन्तव्यः।

नन्वेवं घटमठाद्याकाशभेदः उपाधिं विनापि कुतो न ज्ञायते - इति चेत्। सूक्ष्मबुद्धेः प्राज्ञस्य तत्तत्प्रदेशभेदज्ञाने तदपेक्षाभावात्। सूक्ष्मबुद्धिरहितस्य तु मूढबुद्धित्वादेव तदपेक्षायामपि दोषाभावात्। तदुक्तम् -

**विद्यमानस्य भेदस्य ज्ञापको नैव कारकः।**
**उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ॥**[१]

इत्यादि। इयमेव रीतिः कालावयवस्य क्षणलवादेर्वर्णादेश्च स्वाभाविकत्वे विभुत्वे चानुसन्धेयेति ॥ इति **देशविवेकः** ॥

## वर्णविवेकः

अथ वर्णा नित्याः[२] सर्वगताः व्यक्तिभेदशून्याः द्रव्यात्मका आकाशाश्रिताश्च। ननु - 'शब्दोऽनित्यः कृतकत्वात्', 'शब्दः

---

1 उपाधिखण्डने ४.५

2 सर्वे लौकिका वैदिकाश्च शब्दाः एकपञ्चाशद्वर्णात्मकाः प्रत्येकं व्याप्ता अनादिनित्याश्च – पदार्थसङ्ग्रहे

कृतकः उच्चारणान्वयव्यतिरेकानुविधायित्वात्', तथा 'शब्दोऽसर्वगतः सर्वत्रानुपलभ्यमानकार्यत्वात्', तथा "शब्दः न व्यक्तिभेदशून्यः 'तारो गकारः' 'मन्दो मकारः' इत्यादि प्रतीतिसिद्धविरुद्धधर्माधिकरणत्वात् दहनतुहिनवत्" इत्याद्यनुमानविरोधात् न नित्यत्वादित्रयमङ्गीकर्तुं शक्यम्। किञ्च, नित्यत्वात् सर्वदोपलब्धिप्रसङ्गः, सर्वगतत्वाद् विप्रकृष्टादिसर्वपुरुषैरुपलब्धिप्रसङ्गः, व्यक्तिभेदाभावात् सर्वेषां वर्णानामुपलब्धिप्रसङ्गः, इत्युपलब्धित्रयापादनं दुर्वारम्। 'नापि शब्दो द्रव्यं सामान्यवत्त्वे सत्य-

---

(*) आकाशाश्रितत्वे सति द्रव्यत्वं(?)[1], ध्वनिव्यङ्ग्यत्वे सति व्यापकत्वं वा वर्णस्य लक्षणम्। कादिवर्णे आकाशाश्रितत्वं च परिशेषसिद्धम्। वर्णास्तावत् क्वचिदाश्रिताः वस्तुत्वात् घटवत्। नच भूतळादिः तदाश्रयः सम्भवति। कादीनां सर्वगतत्वेनासर्वगतस्य भूतळादेः तदाश्रयत्वायोगात्। न ह्याश्रयी सर्वगतम् आश्रयस्तु न सर्वगत इति सम्भवति। नच कादीनां सर्वगतत्वे विवादः। सर्वत्रोपलभ्यमानकार्यत्वेन तत्सिद्धेः। कादिकार्यं हि श्रोत्रसन्निकर्षादिकं सर्वत्रोपलभ्यते। अन्यथा देशान्तरे क्वाप्युपलब्धिर्न स्यात्। नच सभायामेव विद्यमानः कवर्णः तदैव चत्वरादिषु उपलब्धुं शक्यः। ननु सभायामुत्पन्नः कवर्णोन्यः चत्वरादिषु अन्यः उत्पन्नः श्रोत्रेण सन्निकृष्टो गृह्यत इति चेन्न। व्यक्तिबाहुल्यं उत्पादविनाशौ चेति बहुकल्पनापत्तेः। लाघवेन एकैव कादिव्यक्तिः "नित्या सर्वगता च" इति सिद्धिः। अत एव न जलादिद्रव्यान्तरमाश्रयः। आकाशस्तु सर्वगतत्वादाश्रयीभावभवितुं योग्य इति सिद्धं कादिवर्णानामाकाशाश्रितत्वम्। ध्वन्यात्मकशब्दानां व्यावृत्तये आद्यलक्षणे विशेष्यपदम्। (खपाठः)

---

1 लक्षणमिदं कालेऽतिव्याप्तम्। देशकालयोरन्योन्यवृत्तित्वात्।

स्मदादिबाह्येन्द्रियग्राह्यत्वात् रूपादिवत्' इत्यनुमानविरोधात्, इति चेत्।

अत्रोच्यते– शब्दमात्रस्य पक्षत्वे सर्वेष्वेतेषु प्रयोगेषु ध्वन्यात्मकशब्देषूक्तसाध्याङ्गीकारेणांशतः सिद्धसाधनम्। वर्णात्मकशब्दमात्रस्य पक्षत्वेऽप्युक्तहेतूनां स्वरूपासिद्धिः। न चोच्चारणजन्यत्वेन कृतकत्वं साध्यत इति वाच्यम्। तस्याप्यसिद्धेः। न चोच्चारणान्वयव्यतिरेकानुविधायित्वात् तत्सिद्धिरिति वाच्यम्। वर्णस्वरूपे[1] तदभावात्। वर्णो हि न स्वरूपेण ज्ञायते। किन्त्वन्धकारावृतो घटो यथा स्वज्ञाने स्वव्यञ्जकालोकमपेक्षते तथा वर्णः स्वव्यञ्जकध्वनिमपेक्षते। तथाचोच्चारणान्वयव्यतिरेकानुविधानं कृतकत्वं च ध्वनेरेव न वर्णस्येति आद्यो हेतुरसिद्ध एव।

एतेन 'उत्पन्नो गकारः' 'नष्टो गकारः' इति प्रतीत्या नासिद्ध इति निरस्तम्। वर्णस्यानादित्वात् तत्प्रतीतेर्वर्णविषयत्वानुपपत्त्या तद्व्यञ्जकीभूतध्वनिविषयत्वोपपत्तेः। न च साक्षाद् वर्णनिष्ठतयोत्पादविनाशयोः प्रतीतिविरोध इति वाच्यम्। ध्वनिविनिर्मुक्तस्य केवलस्य वर्णस्याप्रतीतेः। 'स्वर्गो ध्वस्तः' इत्यादाविव [2]'सविशेषणे हि' इति न्यायेन विशेषणमात्रविषयत्वोपपत्तेः।

---

1 प्रागुच्चारणादनुपलब्धा वर्णा उच्चारणे सत्युपलभ्यन्ते इत्येवानुभवसिद्धम्। नतु तेषामुत्पत्तिर्विनाशो वा – विष्णुतत्वविनिर्णयटीकायाम्

2 सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः।

'शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्' इति सत्प्रतिपक्षो हेतुः। एवं द्वितीयो हेतुरपि अनेकप्रदेशेषु गोष्ठचत्वरादिषु स्थितैरनेकैः पुरुषैर्वर्णस्य युगपदुपलभ्यमानकार्यत्वादसिद्ध एव।

एवं विरुद्धधर्माणां तारत्वमन्दत्वादीनामुक्तरीत्या वर्णव्यञ्जकध्वनिधर्मत्वेन वर्णधर्मत्वाभावात् तृतीयोऽपि हेतुरसिद्धः। 'सोऽयं गकारः'[१] इति प्रत्यभिज्ञाबाधितश्च। चतुर्थोऽपि 'शब्दो द्रव्यं साक्षादिन्द्रियग्राह्यत्वात् घटवत्' इत्याद्यनुमानेन सत्प्रतिपक्षितोऽप्रयोजकश्च।

यच्चोपलब्धित्रयापादनं तदप्यापातरमणीयम्। तथाहि – वक्तृकण्ठस्थो वायुः तत्तद्वर्णोच्चारणानुकूलप्रयत्नोद्बुद्धः उरःकण्ठप्रभृतीनि स्थानानि प्राप्य तद्गतभूताकाशमुपादानीकृत्य वर्णव्यञ्जकध्वन्यात्मकं शब्दमुत्पादयति। ततः वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा द्वितीयादिशब्दान् श्रोतुः श्रोत्रपर्यन्तमुत्पाद्य श्रोत्रगतध्वनिना सह तत्तद्वर्णग्रहणप्रतिबन्धकश्रोत्रगततिमिरवायुमुपहन्ति। ततः प्रक्षीणप्रतिबन्धकं सन्निकृष्टपुरुषश्रोत्रं वर्णं गृह्णाति।

तथा च [२]वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्याः। अन्योपलब्धिकालेऽन्यस्यानुपलम्भात् गन्धादिवत्। एवं 'ध्वनयः स्वग्राह्यवर्ण-

---

1 न चोच्चारणकाल एव वर्णानामुत्पत्तिरिति वाच्यम्। तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् – विष्णुतत्वविनिर्णये

2 अत आकाशगुणे शब्दे व्यज्यमाना वर्णादयः – विष्णुतत्वविनिर्णये

नियतिमन्तः तद्ग्राहकत्वे सति तज्जातीयान्तराग्राहकत्वात्, घृतादिवत्' इत्यनुमानेन वर्णादीनां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादिसिद्धौ, यथाऽन्धकारस्थितघटरूपकुङ्कुमगन्धाभिव्यञ्जकयो-रालोक घृतयोरन्यतरसद्भावकालेऽन्यतरस्यैवाभिव्यक्तिः, न तु द्व(त)योः, नापि सर्वदा[1], नापि सर्वेषाम्, तथेहापि वर्णोच्चारणानुकूलप्रयत्नोद्बुद्धवायुजन्यो यो ध्वनिः यदा यदीयश्रोत्रस्थस्य यद्वर्णग्रहणप्रतिबन्धकस्य तिमिरवायोरपहारकः स ध्वनिः तदैव तत्पुरुषं प्रत्येव तद्वर्णस्यैवाभिव्यञ्जकः नान्यस्येति नियमाश्रयणे कथमुपलब्धित्रयापादनम् ।

ननु यावन्तः प्रतिबन्धका वायुविशेषादयः तेषां च निरासका ध्वनयः तावन्तः ते चान्योन्यासङ्कीर्णकार्यकराः स्वस्वकार्ये तत्तद्वर्णग्रहणरूपे तत्प्रतिबन्धकनिरसने समर्थाः नान्यकार्ये इत्यादिबहुकल्पनात्कल्पनागौरवं कुत आश्रयणीयमिति चेत् ।

वेदस्तावदनादिरपौरुषेयः, वर्णसमुदायात्मकश्चेति वक्ष्यते । वर्णानामनादिनित्यत्वाद्यभावे तदसम्भवः । न ह्युत्पत्त्यादिमद् वृक्षसमुदायात्मकं वनमनादिनित्यं भवति । तथाच 'सर्वतो बल-

---

1 ध्वनेश्च आशुतरविनाशित्वेन व्यञ्जकाभावान्न सर्वदोपलब्धिप्रसङ्गः । भूताकाशमेव श्रोत्रम् । तद्गुण एव ध्वनिः । तच्च स्वतः सावयवम् । अतः प्रदेशावर्ति ध्वनिः तदवच्छिन्नमेव वर्णं व्यञ्जयतीति न सर्वेषाम् उपलब्धिः – विष्णुतत्वविनिर्णयटीकायाम्

वती ह्यन्यथानुपपत्तिः' इति न्यायेन वर्णस्यानादिनित्यत्वसिद्धौ तत्रोपलब्धित्रयप्रसङ्गनिरासाय एतावतोर्थस्य कल्पनात् न कल्पना -गौरवं दोषः। 'वर्णः क्वचिदाश्रितः वस्तुत्वात् घटवत्' इति कस्मिंश्चिदाश्रये सिद्धे न पृथिव्यादिस्तस्याश्रयः, असर्वगतत्वात्, न हि सर्वगतस्यासर्वगत आश्रयो भवतीति परिशेषेणाव्याकृताकाश एव तदाश्रयः। लक्षणं तु वृत्तिमत्त्वादिकमेवोह्यम्। इति **वर्ण-विवेकः ॥**

## आत्मविवेकः

अथ आत्मा निरूप्यते। आत्मा 'घटमहं जानामि' इत्यादि-प्रतीत्यवलम्बनः। 'शरीरेन्द्रियप्राणसंयोगादिविशिष्टः जडविशेष एव न ततोऽतिरिक्तः चेतनोऽस्ति' इति केचित्। तन्न। शरीरादे-रनित्यत्वेन कृतहानाकृताभ्यागमप्रसङ्गात्। तथा च तदतिरिक्त आत्माङ्गीकार्यः। लक्षणं तु ज्ञातृत्वम्।

सोऽयमात्मा द्विविधः। जीवात्मा परमात्मा चेति।

### जीवात्मविवेकः

तत्र [१]अल्पज्ञानेच्छाकृतिशमदमतेजोबलवीर्योदार्यसुखादि-गुणवान् जीवात्मा। अत्र अल्पत्वं ज्ञानादिसर्वगुणानां विशेष-णम्। तेन ज्ञानादिमहागुणेश्वरव्यावृत्तिः। 'बुद्ध्यादयश्चतुर्दशैव

1 अज्ञानादिदोषयुक्ताः संसारिणो जीवाः – पदार्थसङ्ग्रहे

गुणा नान्ये जीवे सन्ति' इति तार्किकाः । तन्न । 'शान्तो भवेत्, दान्तो भवेत्' इत्यादिश्रुत्या शमादिगुणानामप्यवगमात् ।

सात्विक-राजस-तामसभेदेन जीवात्मा [1]त्रिविधः । तत्र सात्विकोऽपि सात्विक-सात्विक-सात्विकादिभेदेनाष्टविधः । तथाहि – सात्विक-सात्विक- सात्विक-सात्विकशब्दचतुष्टयघटिता प्रथमा विधा । सात्विक-सात्विकसात्विकशब्दत्रयघटिता राजसशब्दोत्तरा द्वितीया । सात्विक-सात्विक-सात्विकशब्दत्रयघटिता तामसशब्दोत्तरा तृतीया । सात्विक-सात्विकशब्दद्वयघटिता राजसशब्दोत्तरा चतुर्थी । सात्विक-सात्विकशब्दद्वयघटिता तामसशब्दोत्तरा पञ्चमी । सात्विक-राजसेति एकसात्विकशब्दघटिता राजसशब्दोत्तरा षष्ठी । सात्विक-तामसेति एकसात्विकशब्दघटिता तामसशब्दोत्तरा सप्तमी । राजस-सात्विकेति राजसशब्दघटिता सात्विकशब्दोत्तरा अष्टमी ।

[2]तत्राद्यो विरिञ्चः । द्वितीया सरस्वती । तृतीयो रुद्रः ।

---

1 ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ – गीता १८.४१
यथेष्टं सञ्चरन्तोऽपि मुक्ता भूम्यादिगा न तु ।
ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः ॥ – गी.ता. १८.४२

2 पितृगन्धर्वपूर्वाश्च मुनयो देवता इति ।
सात्विकास्त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः ।
देवा इन्द्रो विरिञ्चाद्या इति त्रेधैव देवताः ।

चतुर्थ इन्द्रः । पञ्चमो बृहस्पतिः । षष्ठः ऋषिसङ्घः । सप्तमः पितृगन्धर्वचक्रवर्त्यादि । [1]अष्टमो नरोत्तमसङ्घः ।

स चायं पञ्चविधः । ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-बाह्यभेदात् । तत्र ब्राह्मणाः शुद्धसात्त्विकाः । ते च सप्तविधाः । परमहंस- हंस-बहूद-कुटीचक-वानप्रस्थ-नैष्ठिक-गृहस्थभेदात्[2] । तत्र शिखायज्ञोपवीतरहितः एकदण्डः बाह्यकर्मरहितः परमहंसः । यज्ञोपवीतवान् एकदण्डी शिखारहितः अल्पबाह्यकर्मयुक्तः हंसः । बाह्यकर्मयुक्तत्वात् पूर्वस्मात् किञ्चिदूनः । एवमग्रेऽपि । त्रिदण्डी शिखायज्ञोपवीतवान् ग्रामैकरात्रिः पूर्वस्मात् किञ्चिदधिककर्मयुक्तः बहूदकः । त्रिदण्डी शिखायज्ञोपवीतवान् यावज्जीवं पुत्रदत्तान्नादः

क्रमोत्तराः शिवो वाणी ब्रह्मा चैवोत्तरोत्तराः ।
सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः ।
तस्माद् यावद् विमुक्तिः स्यान्मुक्तावेवं सुखक्रमः । – गी.ता.

1 राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः । – गी.ता.

2 तत्रस्थशुद्धसत्त्वास्तु परमहंसाः प्रकीर्तिताः ।
हंसो बहूदः कुटिजो वनस्थो नैष्ठिको गृही ।
क्रमाद् रजोऽधिका बाह्यं कर्मैषामधिकं यतः ।
धर्माः परमहंसानां बाह्या एव शमादिकाः ।
देवादेः कर्मबाहुल्यं न लिङ्गं रजसः क्वचित् ।
न हि विष्णोश्चलेत् तेषां मनः कर्मकृतावपि ।
अन्येषां चलचित्तत्वात् प्रायः स्यात् कर्म राजसम् ।
यदि तत् स्मारकं विष्णोर्विद्यात् सात्त्विकमेव तु । – गी.ता.

पूर्वस्मात् किञ्चिदधिककर्मवान् कुटीचकः। वन्यान्नभुक् स्त्री-सङ्गरहितः अपशुकर्मवान् वनस्थः। [१]यावज्जीवं दाररहितः गुरु-कुलवासी समिच्छेदाग्निपूजापैतृकादिबाह्यकर्मप्रचुरो नैष्ठिकः। कृतदारः पशुकर्मयुक्तः गृहस्थः। एवं ब्राह्मणाः शुद्धसात्त्विकाः। [२]किञ्चिद् रजोयुक्ताः सात्त्विकाः क्षत्रियाः। समरजोयुक्ताः सात्त्विकाः वैश्याः। सत्वात् किञ्चिदूनतमोयुक्ताः शूद्राः बाह्याश्च। एवमग्रेऽपि।

[३]तदेवं विरिञ्चमारभ्य पुल्कसादिबाह्यान्ताः उक्तविधयाऽष्ट-विधा जीवा मोक्षयोग्याः सात्त्विकाः। राजसाः द्विविधाः। राजस-राजस[४], राजस-तामसाश्चेति। हरेः सर्वोत्तमत्वं जानन्तोऽपि सन्दिहाना आद्याः। तेऽपि ब्रह्म-क्षत्र-वैश्य-शूद्र-अन्त्यज-

1 धर्मार्थहिंसनाऽग्निश्च विशेषो ब्रह्मचारिणः।
पैतृकं चापि यतितो दारास्तु गृहिणस्ततः।
असङ्गो ग्राम्यसन्त्यागः पश्वहिंसा गृहस्थतः।
वनस्थश्च विशेषोऽयं सर्वेषामितरत् समम्। – गी.ता.

2 सात्त्विकाः स्वल्परजसः क्षत्रियाः सत्त्वराजसाः।
वैश्याः शूद्रा अतिस्वल्पसत्त्वाधिक्येन तामसाः। – गी.ता.

3 ये तु भागवता वर्णास्तेषां भेदोऽयमीरितः।
सत्त्वाधिकः पुल्कसोऽपि यस्तु भागवतः सदा। – गी.ता.

4 त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः।
अन्याधिक्यं न मन्यन्ते श्रीशाद् राजसराजसाः।
अज्ञा विष्णौ द्वेषहीनाः सर्वे राजसतामसाः। – गी.ता.

भेदभिन्नाः। हरेः सर्वोत्तमत्वमजानन्तः तद्वेषरहिताः द्वितीयाः। तदेवमुभयविधा अपि राजसा नित्यसंसारिण इत्युच्यन्ते।

तामसास्त्रिविधाः। [1]तामस-सात्विकाः, तामस-राजसाः, तामस-तामसाश्च इति। तत्राद्या मर्त्याधमाः। तेऽपि ब्राह्मण-क्षत्रिय-वैश्यभेदभिन्नाः हरिद्वेषयुक्ताः। द्वितीया दैत्यभृत्याः। पूर्व-स्मादधिकद्वेषयुक्ताः। तृतीयाः प्रधानदैत्याः। पूर्वस्मादधिकद्वेष-युक्ताः। अत एव सर्वस्मादधमाश्च। तदेवं त्रिविधाः तमोयोग्या इत्युच्यन्ते।

आहत्यैवमुक्तरीत्या जीवास्त्रयोविंशतिधाः। ईश्वराज्जीवान्तरा-ज्जडाश्च स्वाभाविकात्यन्तभेदवन्तः, [2]अणवश्च।

अन्ये तु – जीवो नाणुः किन्तु विभुः। महत्परिमाणवानिति यावत्। अन्यथा गजादिशरीरे सार्वत्रिकस्पर्शादिज्ञानं न स्यात्। किञ्च काश्मीरदेशीयस्योपभोग्यं वस्त्रादिकं च काम्भोजदेशे जायत इत्यविवादम्। अदृष्टं च कार्यमात्रे कारणमित्यवगतम्। तस्य गुणत्वेन गुणिनं विहाय तावद् दूरेऽवस्थानाभावेन कार्योत्पत्ति-देशवृत्तिकारणस्यैव कार्यजनकत्वनियमेन कार्योत्पत्तिर्न स्यादिति विभुत्वमेवाश्रयणीयम् - इति।

---

1 नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः।
दैत्यभृत्या महादैत्या मुख्यतामसतामसाः॥ – गीताभाष्ये

2 अणु ह्येष आत्मा यं वा एते सिनीतः। पुण्यं पापं च – गौपवनश्रुतेः भाष्ये

तन्न। तस्य विभुत्वाङ्गीकारे स्वशरीर इव घटादावपि सत्वापत्त्या तन्नाशादपि स्वाश्रयनाशविशेषात् दुःखप्राप्तिः (स्यात्)। न चाभिमानविशेष एव दुःखादिनियामकः स च घटे नास्तीति वाच्यम्। घटे तस्याप्यापादनात्। अतत्कर्मनिर्मितत्वान्नेति चेन्न। शरीरवत् तस्यापि तददृष्टनिर्मितत्वाङ्गीकारात्। न च देशान्तर एतदुपभोग्यवस्त्राद्युत्पत्त्यनुपपत्तिः। अदृष्टस्य कमलगन्धादेरिव दीपप्रभाया इव दूरगमनसम्भवात्। कार्योत्पत्तिदेशासम्बद्धस्यैव वा चक्रभ्रमजनकदण्डादेरिव कारणत्वोपपत्तेश्च।

**वालाग्रशतभागस्य शतधा कल्पितस्य च।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ॥**[१]

इत्यादिवचनविरोधश्च।

किञ्च, जीवस्य तावत् 'शरीरोत्क्रान्तिः स्वर्गगतिः स्वर्गादागतिः' इत्यादिक्रियाविशेषा आगमेषु प्रसिद्धाः। विभुत्वपक्षे तेषामनुपपत्तिः। नहि विभुराकाशः कस्माच्चिद्देशादुत्क्रामति गच्छत्यागच्छति वा। निर्णीतं च 'उत्क्रान्तिगत्यागतीनाम्'[२] इत्यत्र सूत्रकृता जीवाणुत्वम्।

अत एव जीवब्रह्मणोरभेदवादिनो निरस्ताः। ब्रह्मणो वक्ष्यमाणरीत्या विभुत्वात्, जीवस्य चोक्तरीत्याऽणुत्वात्। न हि

---

1 न्यायामृतोदाहृता श्रुतिः

2 ब्र.सू. २-३-२०

विरुद्धयोरैक्यं युज्यते। प्रत्युत अणुत्वविभुत्वाभ्यां दहनतुहिनयोरिव भेदसिद्धिः।

एतेन निर्भेदे ब्रह्मण्यणुत्वमहत्त्वरूपविरुद्धधर्माधिकरणत्वस्य व्यभिचारात् न भेदसाधकत्वमिति निरस्तम्। अणुत्वमहत्त्वयोः 'अणोरणीयान् महतो महीयान्'(१) इति श्रुत्यैव ब्रह्मण्यवस्थानप्रतीतेः विरोधवार्ताया एवाभावात्। न हि सहावस्थाने प्रमिते सहानवस्थाननियमलक्षणो विरोधः सम्भवति। ब्रह्मणि अणुत्वमहत्त्वघटकाया अचिन्त्याद्भुतशक्तेः श्रुतेश्च सद्भाववज्जीवे तयोरभावात्।

न चेश्वरनिष्ठैवाचिन्त्यशक्तिः श्रुतिश्च जीवाभेदं कुतो न घटयेदिति वाच्यम्। नहि घटकं घटकमित्येतावता स्वविरोधिनं घटयति। अपि त्वविरोधिनम्। इयं चाद्भुतशक्तिः श्रुतिश्च ब्रह्मणि यदि जीवाभेदं घटयेत, तदा जीवे इव तादृशशक्तेरप्युच्छेदप्रसङ्गादित्यभेदोऽचिन्त्यशक्तिविरोधीति कथं तमपि घटयिष्यति। तथाच महाशक्त्याद्युपपादकवशेन ब्रह्मणि व्यभिचारेऽप्युक्तहेतुः जीवभेदे प्रमाणमेव। तदुक्तम् – 'व्यभिचार्यपवादेन मानमेव भविष्यति'(२) इति।

एतेन भेद औपाधिकः, अत एव संसारदशायामेव वर्तते।

1 तैत्तिरीयारण्यके १०-१०-१

2 उत्सर्गतोऽपि यत्प्राप्तम् अपवादविवर्जितम्।
व्यभिचार्यपवादेन मानमेव भविष्यति ॥ – अनु.३.२.१

मुक्तौ तु स्वकल्पकोपाधिविनाशात् विनश्यति। अभेदस्तु स्वाभाविकः। अत एव मुक्तौ तद्विनाशेऽपि न विनश्यतीति मतं निरस्तम्। देशविवेकोक्तरीत्या आत्माश्रयादिदोषेणोपाधेर्भेदकत्वानुपपत्तेः।

नन्वणुश्चेत् जीवः, क्व वर्तते। [१]हृदीति ब्रूमः। कथं तर्हि पादादिलग्नकण्टकोद्धारादिप्रवृत्तिः। अणोरपि भित्तिकाबिलवर्तिप्रदीपस्य गृहपरिमाणानुसारेण प्रभायाः सङ्कोचविकासवत्, गजाद्यापिपीलिकमणोरपि प्रदेशवृत्तेरात्मनः प्रकाशविशेषस्य सङ्कोचविकासयोः तत्तद्देहमानानुसारेणोत्पत्तेरिति[२] सङ्क्षेपः। इति **जीवा-त्मविवेकः**॥

## परमात्मविवेकः

अथ परमात्मा निरूप्यते। स [३]चानन्तकल्याणगुणपरिपूर्णः जीवजडेभ्योऽत्यन्तविलक्षणः।

अन्ये त्वाहुः – सङ्ख्यादिगुणपञ्चकाभावे द्रव्यत्वासिद्ध्या पञ्चगुणसिद्धिः ज्ञानेच्छाप्रयत्नानामभावे स्रष्टृत्वासिद्धेः गुणत्रयसिद्धिरिति गुणाष्टकातिरेकेणैकोऽपि गुणो न सम्भावयितुं शक्यते।

---

1 'हृदि ह्येष आत्मा' – षट्प्र.३-३-६

2 अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति।
यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः॥– ब्रह्माण्डपुराणे

3 तत्र परमात्माऽनन्तगुणपरिपूर्णः – पदार्थसङ्ग्रहे

कथमीश्वरोऽनन्तगुण इति सम्भावयाम इति। तन्न। 'सत्यं ज्ञानमनन्तं ब्रह्म'[1] इति ईश्वरस्वरूपग्राहिणा धर्मिग्राहकमानेनानन्तगुणवत्वेनैवेश्वरसिद्धेरङ्गीकारात्। अन्यथा तद्विरोधात्।

तथाहि – अत्रानन्तशब्दः[2] 'नास्त्यन्तो मितिः परिच्छेदो यस्य' इति परिच्छेदाभाववाची। परिच्छेदप्रतियोगिनश्च देशः कालो वस्तुशब्दाभिधेयो गुणश्चेति त्रिविधाः प्रसिद्धाः। 'आकाशो -ऽनन्तः' 'कालोऽनन्तः' 'बलमनन्तम्', 'धनमनन्तम्' इत्यादिप्रयोगदर्शनात्। तथाच परिच्छेदाभावः प्रतियोगिभेदाद् देशपरिच्छेदाभावः कालपरिच्छेदाभावः गुणपरिच्छेदाभाव इति त्रिविधः।

तथाच – यथा प्राक्-प्रध्वंस-सदात्वेन प्रतियोगित्रैविध्येन प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावश्चेति त्रिविधोऽप्यभावः 'घटो नास्ति' इत्युक्तेऽविशेषात् प्रतीयते, तथाऽनन्तशब्देनाविशेषात् त्रिविधोऽपि परिच्छेदाभावः प्रतीयत इति गुणपरिच्छेदाभावमुखेनानन्तगुणप्राप्त्या ईश्वरस्याष्टगुणत्वं कथं युज्येत।

ननु यद्यपि अनन्तशब्दो बह्वर्थः। तथापि यथा 'गामानय' 'गां बधान' इत्यादौ गोशब्दो बह्वर्थोऽपि लोकप्रसिद्ध्या प्रथम-

1 तैत्तिरीयोपनिषदि २-२

2 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मण आनन्त्यस्य वाचकोऽनन्तशब्दस्तावद् देशतः कालतो वस्तुतश्चानन्त्यमाह – न्या.सु.

प्रतीतसास्नादिमद्व्यक्तिविशेष एव पर्यवसितः। न च पृथिव्यादिकमपि प्रतीयते। तथा देशापरिच्छेदवत्त्वेन पर्यवसितः न गुणापरिच्छेदमपि प्रत्याययतीति चेन्न। परिच्छेदाभाववाचिनाऽनन्तशब्देन[१] खले कपोतन्यायेन त्रिविधपरिच्छेदाभावस्य युगपदेव प्रतीतेः। प्रतीतौ पौर्वापर्याभावात्। गोशब्दे तु प्रकरणबलात् सास्नादिमद्व्यक्तिविशेष एव प्रथमं प्रतीयते। न पृथिव्यादिकमिति वैषम्यम्।

एतेन [२]निरवधिकपरिमाणवत्त्वं देशानन्त्यम्, अनवधिकसत्ताकत्वं कालानन्त्यम्, असङ्ख्यगुणवत्त्वं गुणानन्त्यं चेति त्रिविधमप्यानन्त्यमनन्तशब्दाभिधेयमिति अनन्तशब्दः सावकाशः

---

1 अनन्तशब्दो हि परिच्छेदाभावमाह। परिच्छेदो हि देशतः कालतो वस्तुतश्च भवन्त्युगपदेव प्राप्नोति। न च तत्र कस्यचित्प्राथम्यमस्ति। नाप्यन्यतमपरित्यागे कारणम्। – न्या.सु. २-२-६

2 कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः।
देशकोटिविहीनत्वं देशानन्त्यं तथैव च।
गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित्।
तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम्॥ – ब्रह्मतर्के।

तत्र देशानन्त्यं नामानवधिकपरिमाणवत्त्वम्। कालानन्त्यं नाम अनवच्छिन्नसत्ताकत्वम्। वस्त्वानन्त्यं नाम अपरिच्छिन्नसङ्ख्यागुणकर्मविग्रहवत्त्वम्।
– न्या.सु. २-२-६

अष्टगुणाद् बाधित इति निरस्तम्। अष्टगुणवत्त्वस्याप्रामाणिकत्वेन तद्बाधोपपत्तेः।

एतेन गुणपञ्चकाभावे द्रव्यत्वाभावापत्त्या गुणपञ्चकस्य, प्रयत्नाभावे तद्गर्भजगत्कर्तृत्वाभावस्य, इच्छाऽभावे तज्जन्यकृत्यभावस्य, ज्ञानाभावे तज्जन्येच्छाभावस्य प्राप्त्या, प्रयत्नेच्छाज्ञानानां चावश्यकत्वेन प्रयोजनवत्त्वादङ्गीकारेऽपि अनन्तानां गुणानां सृष्ट्यनुपयोगेनाङ्गीकारो न युक्त इत्यनन्तशब्दो गुणानन्त्यांशे सङ्कुचद्वृत्तिरेवेति निरस्तम्। न हि प्रमेयसिद्धिः प्रयोजनाधीना। तथा सति कण्टकशौक्त्यादेरीश्वरज्ञानेच्छयोश्च प्रयोजनाभावेनाभावप्रसङ्गात्। किन्तु प्रमाणाधीनैव। प्रमाणं चात्र 'मय्यनन्तगुणेनन्ते गुणतोऽनन्तविग्रहे'(१) इत्यादि। तस्य सङ्कुचद्वृत्तौ नियामकं वाच्यम्। न च नियामकमस्तीत्युक्तम्। प्रयोजनाभावस्य सङ्कोचनियामकत्वे देशकालानन्त्ययोरपि सङ्कोचापत्तेः।

ननु – अनवधिकपरिमाणवत्त्वरूपं देशानन्त्यम् अनवधिकोत्कृष्टपरिमाणत्वम् अनवधिकापकृष्टपरिमाणत्वं चेति द्विविधम्। न चेदं द्वयमप्यत्र विवक्षितुं शक्यम्। उत्कर्षापकर्षौ हि स्वरूपतः दहनतुहिनवद् विरुद्धौ। सुतरां तदानन्त्ये। "परिमाणापकर्षतारतम्यं क्वचिद् विश्रान्तं परिमाणतारतम्यत्वात् परिमाणोत्कर्षतारतम्यवत्" इत्यनुमानविरोधश्च। तथा च अनन्तशब्दस्य सङ्कोच आवश्यक

1 भागवते ६-४-४८

इति गुणानन्त्येऽपि सङ्कोचः किं न स्यादिति चेन्न। तत्र तयोर्विरोधेन सङ्कोचेऽपि, इह तदयोगात्। वस्तुतस्तु न तत्रापि सङ्कोचः। उत्कृष्टापकृष्टपरिमाणयोः विरोधस्यैवाभावात्। किं तयोः समस्तयोर्विरोधः, उत एकावधिकयोः। नाद्यः। एकस्मिन्नेव घटे स्वावयवापेक्षया परिमाणोत्कर्षस्य मेर्वपेक्षया परिमाणापकर्षस्य च दर्शनात्। न द्वितीयः। [१]'अणोरणीयान् महतो महीयान्' इति श्रुत्यैव एकावधिकयोरेव अणुत्वमहत्त्वयोः समावेशप्रतिपादनात्[२]। अणीयान् भगवान् अणोः परमाण्वादितो महीयान्, तस्मादणीयांश्च। एवं महतो महीयान् अणीयांश्च इति व्युत्क्रमेणान्वयः। सर्वसाधारण्येनावक्तव्यत्वात्। न च प्रमाणे प्रदर्शितेऽर्थे विरोधोऽस्ति।

अनुमानं तु परिमाणोत्कर्षस्यापि क्वचिद् विश्रान्त्यनङ्गीकारेण

---

1 तैत्तिरीयारण्यके १०-१०-१; महानारायणोपनिषदि ८-३; कठोपनिषदि २-२०; 'अणीयांश्च महीयांश्च भगवानागमोदितः' – अनु.;
अणीयान् महीयान् इत्युक्तयोरप्यणोर्महतश्चेति शब्दविषयत्वात्
– न्या.सु.२.२.६

2 तस्याचिन्त्याद्भुतैश्वर्यात् व्यवहारार्थमेव च।
परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते॥ – ब्रह्मतर्के भा.ता.(३)

* महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित्। –अनु.

निरवधिकपरिमाणोत्कर्षवतो ब्रह्मणोऽल्पपरिमाणवत्त्वं च व्योम दृष्टान्तीकृत्य व्योमवच्चेति सूत्रखण्डेन प्राह सूत्रकारः – न्या.सु. २.२.६

दृष्टान्ते साध्यवैकल्यादप्रमाणम्[1]। तस्मादनन्तशब्दः क्वचिदपि न सङ्कुचद्वृत्तिरित्यानन्त्यत्रयमपि प्रतिपादयतीति कथमष्टगुण-वत्त्वमङ्गीकारार्हम्।

एतेन सुखदुःखयोः समव्याप्तत्वात् सुखसद्भावे दुःखमपि स्यादिति निरस्तम्। व्याप्तेर्लोकमात्रविषयत्वेनालौकिके भगवत्य-नादरणीयत्वात्। निर्दोषत्वाभावस्योपाधित्वाच्च। "मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे"[2] इत्यादि स्पष्टम्। नात्र प्रमाणान्तर-मुदाहर्तव्यम्।

स्यादेतत्। ईश्वरसद्भाव एव किं प्रमाणम्। अत्रोच्यते – अस्मदादिप्रत्यक्षाभावेऽपि महतां प्रत्यक्षमेकं प्रमाणम्। न च स्वप्रत्यक्षाभावो दोषः। 'स्वप्रत्यक्षसमं हि तत्' इत्युक्तेः। "विमतो बन्धः कस्यचित् प्रसादान्निवर्तते बन्धत्वात् राजप्रसाद-निवृत्तनिगडबन्धवत्", "विमतं जगत् कस्माच्चिदुत्पत्त्यादिमत् कार्यत्वात् घटादिवत्" इत्यनुमानं द्वितीयम्। यद्यपि माता-पितृभ्यां पुत्रादेः, वृष्ट्यादिना सस्यादेः, मुद्गरादिना घटादेरुत्पत्ति -स्थितिनाशानामेव कार्यान्तराणां, प्रसिद्धतत्कारणादेव सम्भवेन नेश्वरस्योपयोगो दृश्यते। तथाऽपि साधारणकार्याणामन्यथोप-पत्तावपि विचित्रतरकार्याणां तेन विनाऽनुपपत्तेः। वस्तुतस्तु

1 न महत्त्वस्यापि विश्रमः। दृश्यतेऽनन्त इत्येव – अनु.

2 भागवते ६.४.४८

"इतरेऽल्पस्य वा न वा" इत्युक्तरीत्या तेषां स्वातन्त्र्याभावात्, साधारणकार्यस्यापि तत्सिद्धिरस्ति[१]। "बन्धको भवपाशेन भवपाशाच्च मोचकः"[२] इत्यादिना बन्धमोक्षयोर्महाकार्ययोस्तदेक-साध्यत्वावगमात् कथं तस्योपयोगाभावः।

अत्र वादिनः सङ्गिरन्ते। **भाट्टास्तावत्** – "नित्यं नैमित्तिकं काम्यं निषिद्धं चेति चतुर्विधं कर्म। तत्र यदकरणे प्रत्यवायः यत्करणे चानागन्तुकं ब्राह्मण्यादिकं निमित्तं तन्नित्यम्। यथा सन्ध्यावन्दनादि। यदकरणे प्रत्यवायः, यच्च पितृमरणाद्या-गन्तुकमुपादाय विहितं तन्नैमित्तिकम्। यथा पितृश्राद्धादि। यस्य करणे फलमुपदिष्टम्, अनुपदिष्टश्चाकरणे प्रत्यवायः, तत् काम्यम्। यथा कारीर्यादि। यत्करणे प्रत्यवाय उपदिष्टः तन्निषिद्धम्। यथा ब्रह्महत्यादि। तत्र नित्यनैमित्तिकयोः करणेन काम्यनिषिद्धयोश्चाकरणेनैव मोक्षसिद्धेः किमीश्वरेण" - इति।

**वैशेषिकास्तु** - "द्रव्यादिसप्तपदार्थानां साधर्म्यवैधर्म्यज्ञान-मात्रादेव निश्रेयसप्राप्तिः"- इति। **नैयायिकास्तु** – [३]"प्रमाणप्रमेय-संशयप्रयोजनादिपञ्चदशानां पदार्थानां तत्वज्ञानादेव आत्मशरीरे-

---

1 ईश्वरोपयोगसिद्धिरस्तीत्यर्थः।

2 विष्णुतत्वविनिर्णयोदाहृतप्रमाणवचनम्

3 प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव तर्कनिर्णयवादजल्पवितण्ड-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसाधिगमः – न्यायसूत्रम्

न्द्रियप्राणबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदभिन्न-द्वादशविधप्रमेयद्वारा निश्रेयसाधिगमः" - इति।

**साङ्ख्यास्तु** - अन्तःकरणं प्रकृतिः जीवः पुरुषः। प्रकृति-पुरुषयोः भेदज्ञानादेव निश्रेयसप्राप्तिरिति।

**मायिनस्तु** - "मोक्षो नाम बन्धनिवृत्तिः। स च बन्धो मायिको न परमार्थः शुक्तिरजतादिवत् प्रतीतिमात्रशरीरत्वात्। स तु बन्धः यथा शुक्तितत्त्वज्ञानेन रजतं निवर्तते तथा निवर्तते न पुनः स्वनिवृत्तौ ईश्वरप्रसादादिकमपेक्षते" - इति।

**जैनास्तु** - "पुद्गलज्ञानादेव मोक्षः। पुद्गलस्तु शरीरम् आत्मा च। तयोर्भेदज्ञानं पुद्गलज्ञानम्। धर्मो वा मोक्षसाधनम्। धर्मः अहिंसारूपः"- इति[१]।

**शून्यवादिनस्तु**- "शून्यतत्वपरिज्ञानादेव मोक्षः। मनोवाचा-मगोचरं निर्धर्मकं च शून्यम्" - इति। **सौत्रान्तिकाश्च** - "पञ्च-स्कन्धात्मकस्य प्रपञ्चस्य क्षणिकत्वज्ञानं मोचकम्। रूपस्कन्धः विज्ञानस्कन्धः वेदनास्कन्धः संस्कारस्कन्धः स्वरूपस्कन्धश्चेति पञ्चस्कन्धाः। तत्र रूपस्कन्धो बाह्यः, अन्ये तु आन्तरा" इति।

न चैतेषु मतेषु ईश्वरस्योपयोगोऽस्ति।

अत्रोच्यते - आद्येषु पञ्चसु मतेषु ईश्वरोऽङ्गीकृत एव।

---

1 पूर्वसदृशस्य विज्ञानस्य ज्ञानाद्ध्यानाद्वा मोक्ष इति वैभाषिकाः।

"तन्मे प्रमाणं शिवः" इति भाट्टवचनात्। वैशेषिकनैयायिकयोश्च साधर्म्यवैधर्म्यज्ञानस्य प्रमाणादिषोडशपदार्थतत्वज्ञानस्य वा न साक्षान्मोक्षहेतुत्वम्। किन्तु धर्मद्वारैव। 'यतोऽभ्युदयान्निश्रेयससिद्धिः स धर्मः' इति सूत्रात्। धर्मोऽपि न साक्षान्मोक्षहेतुः, अपि तु ईश्वरप्रसादापेक्षयैव। 'तस्येश्वरचोदनाभिव्यक्ताद् धर्मादेव' इति सूत्रात्।

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥

इति तदीयवचनाच्च। सेश्वरसाङ्ख्यमतस्य प्रसिद्धत्वाच्च। मायि-मतेऽपि विश्वकल्पकाज्ञानस्याश्रयं विनाऽनुपपत्तेः तदाश्रयत्वेनेश्वरोऽङ्गीकृत एव। इतरपञ्चमतेषु ईश्वरानङ्गीकारेऽपि न दोषः। तेषां वेदबाह्यत्वात्।

'द्यावाभूमी जनयन् देव एकः'(१) इत्यादिश्रुतयश्चात्रानुसन्धेया इति सङ्क्षेपः। – इति **परमात्मविवेकः**।

## गुणविवेकः

निरूपितेषु द्रव्येषु तद्धर्मा ये गुणादयः।
तत्राप्यादौ गुणाः सम्यङ्-निरूप्यन्ते माध्वसंविदा ॥

---

1 ऋग्वेदे १०-८१-३, वाजसनेयीसंहिता १७-१९, मैत्रायणीसंहिता २-१०-२, १३३-९, श्वेताश्वतरोपनिषदि ३-३

## लक्षणानि

तत्र गुणत्ववान् [१]गुणः । गुणत्वं च जातिविशेषः । ननु घटादौ रूपादौ च परस्परपरिहारेण वर्तमानयोः द्रव्यत्वगुणत्वयोः गुणत्रये समावेशलक्षणसाङ्कर्यदोषात् कथं गुणत्वं जातिः । गुणत्रयं हि 'द्रव्यं कर्मच कालश्च'[२] इत्यत्र द्रव्यशब्देनाभिधानात् द्रव्यत्वजातिमत् । 'सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः[३]' इति गुणत्वेन व्यवहारात् गुणत्ववच्च । न च सङ्कीर्णा जातिर्भवति ।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥ – इति ।

जातिबाधकेषु साङ्कर्यस्य परिगणनात् । अन्यथा द्रव्यत्वेन सङ्कीर्णं प्रत्यक्षत्वमपि जातिः किं न स्यादिति चेत् । स्यादियं विभीषिकाप्रक्रिया अनुगतजातिवादिनां मते । अननुगतजातिवादिनां मते तु साङ्कर्यदोषवार्ताया एवाभावात् । तथाहि – यद्यपि अतीन्द्रिये परमाण्वादौ द्रव्यत्वं प्रत्यक्षत्वेनासहावस्थितम् । प्रत्यक्षत्वमपि रूपादौ द्रव्यत्वेन न सहावस्थितम् । तथाऽपि तदुभयमपि घटादौ न वर्तते । परमाणुवृत्तिद्रव्यत्वस्य रूपादिवृत्तिप्रत्यक्षत्वस्य च तत्तन्मात्रवृत्तित्वेन तदुभयोर्घटादौ समावेशा-

---

1 दोषभिन्नत्वं गुणत्वम् – पदार्थसङ्ग्रहे

2 भागवते २-५-१४, २-१०-१२

3 भगवद्गीता

योगात्। परस्परविरुद्धयोर्धर्मयोरेकत्र समावेशो हि साङ्कर्यम्। प्रत्यक्षत्वादेर्जातित्वाभावस्तु अनवस्थादिदोषान्तरादेव न साङ्कर्य-दोषादित्युपपत्तेः।

अथवा यथा शब्दतन्मात्रादीनां द्रव्यत्वमेव, तज्जन्यशब्दा-दीनामाकाशादिवृत्तीनां गुणत्वमेव, तथा मूलप्रकृतेर्द्रव्यत्वं तज्जन्यसत्वादीनां गुणत्वमेवेति व्यवस्थाङ्गीकारे कथं साङ्कर्यम्।

अथवा 'गुणत्वं जातिः' इति वदतामस्माकं जातिशब्देना-खण्डोपाधिरेवोच्यते। न तु 'नित्यमेकमनेकानुगतम्' इत्यादि-नोक्तसामान्यशब्दोक्ता जातिः। तल्लक्षणस्य दूषयिष्यमाणत्वात्। एवं सर्वत्रापि जातिशब्देनाखण्डोपाधिरेव उच्यते। अतो गुणत्व-निर्वचने न प्रयतितव्यमित्यभिप्रायः।

अथवा द्रव्यमात्राश्रितत्वं गुणत्वम्। सामान्यादेर्गुणाश्रितत्वाद् व्यावृत्तिः। यद्यपि कर्मणि द्रव्यमात्राश्रितत्वमस्ति। तथाऽपि "तद्व्यतिरिक्तत्वे सति" इति विशेषणान्न दोषः।

अथवा गुणत्वव्यवहारविषयत्वं गुणत्वम्। तद्व्यवहारश्च अनादिकालाद् रूपादावेव न क्रियादौ। अनादिकालीनव्यवहारस्य स्वतन्त्रेच्छापुरुषवत् अपर्यनुयोज्यत्वात्। अत एव 'अस्ति घटा-भावप्रतियोगित्वव्यवहारो घटे न पटे। व्यवहारस्यापर्यनुयोज्यत्वात्' इति मणिसारकृताऽप्यभाषि तर्कभाषाव्याख्यानावसरे। अत एव

'मन्त्रत्वेनाभियुक्तप्रयोगविषयत्वं मन्त्रत्वम्' इति मीमांसकानां मन्त्रत्वनिर्वचनम् ।

## विभागः

स गुणो बहुविधः । शब्द- स्पर्श- रूप- रस- गन्ध- बुद्धि- सुख-दुःख- इच्छा- द्वेष- प्रयत्न- धर्म- अधर्म- संस्कार- सङ्ख्या- परिमाण- संयोग- परत्व- अपरत्व- गुरुत्व- द्रव्यत्व- स्नेह- विरक्ति- भक्ति- शक्ति- शम- दम- ओजो-बल- वीर्य- स्थैर्य- कान्त्यादिभेदात् ।

## शब्दादिगुणपञ्चकविवेकः

तत्र श्रोत्रग्राह्यो गुणः शब्दः । त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । चक्षुर्मात्रग्राह्यो गुणो रूपम् । रसनग्राह्यो गुणो रसः । घ्राणग्राह्यो गुणो गन्धः ।

अत्राऽद्यलक्षणस्य प्रागुक्तरीत्या त्रिविधेषु शब्देषु मध्ये गुणात्मकशब्दो लक्ष्यम् । न द्रव्यात्मकः, मात्राशब्दात्मको वा । तेन मात्रात्मके शब्दे उद्भूतशब्दत्वाभावेन श्रोत्रग्राह्यत्वाभावेऽपि नाव्याप्तिः । वर्णात्मके श्रोत्रग्राह्यत्वेऽपि गुणत्वाभावान्नातिव्याप्तिः । वर्णात्मकशब्दो व्यङ्ग्यः, ध्वन्यात्मकशब्दो व्यञ्जकश्चेत्युभयं श्रोत्रेन्द्रियेण गृह्यत इति ध्वन्यात्मकशब्दे लक्षणसमन्वयः ।

* * * *

## शब्दविभागः

स च त्रिविधः। संयोगजः, विभागजः, शब्दजश्चेति। तत्राद्यो भेरीदण्डसंयोगजन्यः। द्वितीयो वंशपाटनजन्यः चटचटशब्दः। तृतीयः। द्वितीयादिः श्रोत्रपर्यन्तमुत्पन्नः शब्दः। त्रिविधानामप्येषां द्वितीयादिशब्दानां पूर्वपूर्वशब्दो निमित्तकारणम्।

अत्र पञ्चस्वपि लक्षणेषु शब्दत्वादिधर्मेष्वतिव्याप्तिवारणाय गुणपदम्।

## जातिव्यक्त्योर्भेदाभेदसमर्थनम्

ननु जातिव्यक्त्योरभेदेन जातौ गुणत्वमस्तीति कथं तेन तद्व्यावृत्तिः। मैवम्। भेदस्याप्यङ्गीकृतत्वेन जातेर्गुणत्वाभावात्। तर्हि शब्दत्वादिजातौ कथं लक्षणसद्भावः[1]। शब्दादेर्व्यक्तिविशेषस्य श्रोत्रादिग्राह्यत्वेऽपि ततो भिन्नेषु शब्दत्वादिषु श्रोत्रादिग्राह्यत्वाभावेन तेषु लक्षणाप्रसक्त्या तद्वारणायोपात्तं गुणपदं व्यर्थमेव।

स्यादेतत्, जातिव्यक्त्योः यदि अत्यन्तभेदः स्यात्। न चैवम्। किन्तु भेदाभेदौ। तयोः प्रामाणिकत्वात्। 'विमता जातिः स्वाश्रयाद् भिन्ना, तस्मिन् सत्यसत्वात्, यो यस्मिन् सत्य-सन् स तस्माद् भिन्नः, यथा घटे सत्यसन् पटः घटात्' इत्यादि-सम्भवात्। 'विमता जातिः स्वाश्रयव्यक्त्यभिन्ना, कुण्डबदर-

1 येन लक्षणं जातावतिव्याप्तमिति जातिवारणाय गुणपदोपदानमित्याक्षेपः

प्रतीतिविलक्षणप्रतीतिविषयत्वात्, व्यतिरेकेण भूतलघटवत्' इति च प्रयोगसम्भवात्।

नन्वेवं भेदाभेदयोर्विरोधादुभयसाधनं बाधितम्। अन्यथाऽग्नौ शैत्यमौष्ण्यं चानुमेयं स्यादिति चेन्न। निरवकाशोभयविधप्रमाणेनान्यत्र विरुद्धयोरपि एकस्मिन् वस्तुनि साधनसम्भवात्। अन्यथा पृथिवीवाय्वोरनुष्णाशीतस्पर्शोऽपि निराकार्यः स्यात्। अत एव निरवकाशप्रमाणेन ब्रह्मणि अणुत्वमहत्त्वअन्तरत्वबाह्यत्वादयो धर्माः सिद्ध्यन्ति। शैत्यानुमानं तु न निरवकाशम्। बाधव्यभिचारदोषसद्भावेन भ्रान्तिमूलत्वसम्भवात्। औष्ण्यप्रत्यक्षं तु दोषादर्शनेन अभ्रान्तिमूलत्वात् निरवकाशम्। निरवकाशेन च सावकाशस्य बाधो युक्तः। न पुनर्निरवकाशयोरेव परस्परं बाध्यबाधकभाव इति वैषम्यम्। तथाच जातिव्यक्त्योर्भेदाभेदयोरुभयोरपि सद्भावेन भेदेन गुणत्वव्यावृत्तिः, अभेदेन श्रोत्रादिग्राह्यत्वसम्भव इति किमनुपपन्नम्?

नन्वेवं भेदेन श्रोत्रादिग्राह्यत्वाभावः, अभेदेन गुणत्वसद्भावश्च स्यादिति पूर्वोक्तदोषतादवस्थ्यम्। मैवम्। न हि भेदाभेदौ केवलमङ्गीक्रियेते। किन्तु, विरुद्धोभयकार्यप्रतीतौ तदुभयनिर्वाहायैव। ततश्च तदुपहितकार्यनिर्वाहार्थमङ्गीकृतयोः तयोर्भेदाभेदयोः कथं विरुद्धकार्यकारित्वं स्यात्। अन्यथा तदुभयसाधनप्रयासो विफलः स्यात्।

एवं द्वितीयलक्षणे तृतीयलक्षणे च मात्रपदेन सङ्ख्यादिव्यावृत्तिः । यद्यपि तृतीयं लक्षणं सरीसृपादिचक्षुर्ग्राह्येऽतिव्याप्तम् । तथाऽपि तदीयचक्षुर्गोळके श्रोत्रेन्द्रियस्यापि सद्भावेन तस्य तद्ग्राह्यत्वेऽपि चक्षुर्ग्राह्यत्वाभावः, सार्वजनीनचक्षुर्ग्राह्यत्वस्य विवक्षितस्य वा तत्राभाव इति नातिव्याप्तिः ।

एवं पञ्चमलक्षणस्यापि पशुघ्राणग्राह्ये रूपादौ नातिव्याप्तिः । 'घ्राणैः पश्यन्ति पशवः' इति वचनस्येतरेन्द्रियसहकारित्वपरत्वेन तत्र तदभावात् ।

## श्रोत्रादिषु शब्दादिगुणवत्त्वसमर्थनम्

ते च शब्दादय उद्भूतानुद्भूतभेदेन द्विविधाः । तत्रोद्भूता शब्दादयः भेर्याद्यवच्छिन्नाकाशवाय्वादिषु । अनुद्भूतास्तु श्रोत्रत्वगादिषु ।

ननु चतुर्विंशतिविधाः परमाणवः चतुर्विंशतितत्वानि जनयन्तीत्युक्तम् । तेषु च सर्वेषु परमाणुषु न शब्दादयः सन्ति । कारणगुणानां स्वकार्यगुणारम्भकत्वनियमेन सर्वतत्वानां शब्दादिमत्त्वप्रसङ्गात् । किन्तु कतिपयेष्वाकाशादिपञ्चविधपरमाणुष्वेव तथा । तदारब्धेष्वाकाशादिष्वेव कारणगुणन्यायेन शब्दादिगुणसम्भवेऽपि श्रोत्रत्वगादिषु कथं शब्दादिगुणसम्भवः, उच्यते । श्रोत्रादीनामाकाशादिकारणकत्वात् कारणगुणन्यायेनैव श्रोत्रादिषु शब्दादिगुणसम्भवः ।

ननु उद्देशक्रमप्रस्तावे(?) तामसाहङ्कारतत्वभागसहकृतं श्रोत्रादीन्द्रियमाकाशादिभूतजनकम् इत्युक्तम्। इदानीं तु भूतानामिन्द्रियकारणत्वमुच्यते तथा च कथं न विरोधः। उच्यते – "सृष्टिर्हि द्विविधा। सूक्ष्मा स्थूला चेति। सूक्ष्मसृष्टौ 'तेभ्यो भूतानि जज्ञिरे' इति वचनात् सूक्ष्माणीन्द्रियाणि सूक्ष्मभूतानां कारणमित्युक्तम्। न च तावता इन्द्रियाणां बन्धकतादि सम्भवति। बहुलोपचयाभावेन स्वकार्याक्षमत्वात्। उपचयो ह्युपबृंहणम्। वृद्धिरिति यावत्। न ह्यनुपचितः पदार्थः स्वकार्याक्षमो भवन् स्थूलसृष्टिमारभते। तथाच इन्द्रियाणामुपचयाधिक्यसिद्ध्यर्थं भूतैरुपचयोस्ति। 'तेषां भूतैरुपचयः सृष्टिकाले विधीयते'[१] इति वचनादिति प्रागप्युक्तम्। यथा "जले नौः शकटं वहति, स्थले तु नावं शकटो वहति" इति परस्परं जलस्थलभेदेन वाह्यवाहकभावो न विरुद्धः, तथा इहापि सृष्टिभेदेन परस्परं कार्यकारणभावो न विरुद्ध इति श्रोत्रादिषु शब्दादिगुणसिद्धिः।

ननु तथापि त्वगिन्द्रियादावुक्तरीत्या स्पर्शाद्या गुणाः सन्तु। तथापि न श्रोत्रे शब्दः। तस्याकाशात्मकत्वेन तस्य च नित्यत्वेन तदारम्भकपरमाण्वभावेन कारणगुणन्यायानवसरेण आकाशस्यैव शब्दगुणाभावे तदात्मके श्रोत्रे सुतरां शब्दाभाव इत्यादिचोद्यम्, आकाशद्वैविध्यादेः समर्थिततत्वेन प्रागेव निरस्तम्।

1 सूत्रभाष्ये (२-४-१)

किञ्च श्रोत्रं न नित्याकाशात्मकम् । बधिर्याभावप्रसङ्गात्, निर्जनप्रदेशोत्पन्नशब्दग्रहणप्रसङ्गात्, 'कर्णशष्कुल्यवच्छिन्ननभः श्रोत्रम्' इति परिभाषाविरोधात्, निःशब्दस्थलगतपुरुषीयश्रोत्रे शब्दगुणकत्वाकाशलक्षणस्याव्याप्तिप्रसङ्गाच्च । न हि निःशब्दप्रदेशे भेरीदण्डादिसंयोगजन्यशब्दमादाय तत्र लक्षणं शक्यमुपपादयितुम् । किन्त्वनित्याकाशात्मकमेव । तस्योक्तरीत्या शब्दवत्त्वमङ्गीकार्यम् ।

नन्वस्तु श्रोत्रे शब्दः । तस्यानुद्भूतत्वं कुत इति चेन्न । यतो भेरीदण्डसंयोगादिना जातो यः शब्दः श्रोत्रसमीपं प्राप्तः स एव श्रोत्रेणानुभूयते । न तु श्रोत्रेन्द्रियगतः । न हि क्वचित् 'श्रोत्रगतमेव शब्दं प्रत्येमि' इत्यनुभवति । "विमतः शब्दः न श्रोत्रेण गृह्यते, अतिसमीपस्थत्वात् । यो यस्यातिसमीपस्थः स तेन न गृह्यते । चक्षुषोऽतिसमीपस्थपक्ष्मादिर्यथा" इत्यनुमानविरोधाच्च । तथाच फलबलाद् उद्भूतानुद्भूतत्वविभागोऽपि प्रामाणिकः ।

अत एवेन्द्रियलक्षणे तार्किकप्रदर्शिते शब्देतरपदं व्यर्थम् । श्रोत्रे उद्भूतशब्दाभावेन अव्याप्तिप्रसक्त्यभावात् ।

इयमेव रीतिः त्वगिन्द्रियादौ स्पर्शादिसद्भावे तस्यैवानुद्भूतत्वे द्रष्टव्या ।

## स्पर्शादिविभागः

तत्र स्पर्शः उष्ण-अनुष्ण-अनुष्णाशीतभेदात् त्रिविधः । उष्ण-स्तेजसि । अनुष्णो जले । तृतीयोऽपि द्विविधः । रूपसमानाधिकरणः तदसमानाधिकरणश्चेति । तत्राद्यः पृथिव्याम् । द्वितीयो वायौ ।

रूपं तु शुक्ल-रक्त-नील-पीत-हरित-कपिश-चित्रभेदात् सप्तविधम् । शुक्लादितन्त्वारब्धपटे अर्थसमाजरूपसामग्रीसमावेशमहिम्ना अनेकरूपोत्पत्तिः । न तु चित्राख्यं रूपान्तरमस्तीति केचित् । तन्न । अनेकविरुद्धग्रामणीनिष्ठग्राम इव परस्परविरोधेन रूपमात्रानुत्पत्तिप्रसङ्गात् । तथाचानुष्णाशीतस्पर्शादिवत् तत्सामग्रीसमावेशाद् रूपान्तरमेवोत्पद्यते[१] ।

रसोऽपि मधुर-आम्ल-लवण-कटु-तिक्त-कषायभेदात् षड्विधोपि जलपृथिव्योः । [२]जले मधुर एवेति व्यवस्था तु जले प्रायेण माधुर्यस्याभिभवाभावात् । न तु रसान्तरस्याभावात् । उक्तरीत्या रसवत्परमाणुजन्यत्वात् । अन्यथा तत्कार्ये पृथिव्यां सोऽपि[३] न स्यात् ।

---

1 एकमेव हि चित्रं नामरूपमाश्रयं व्याप्यवर्तीति पदार्थविदः – न्या.सु.

2 जले तु मधुर एव – पदार्थसङ्ग्रहे ।

ननु लवणसमुद्रे लवणरसस्यैवानुभवसिद्धत्वात् कथं जले मधुर एवेति चेन्न । स्वत एव मधुररसस्य समुद्रस्य अगस्त्यपानेन पुनर्मूत्रात्मना तद्देहात् निःसृतत्वात् लवणरस औपाधिक एव – मध्वसिद्धान्तसारे

3 पृथिव्यामपि स न स्यादिति पाठः सम्भाव्यते ।

सुरभ्यसुरभिभेदेन द्विविधोपि गन्धः पृथिव्यामेव। **इति शब्दा -दिगुणपञ्चकविवेकः ॥**

## बुद्धिविवेकः

### लक्षणम्

अथ बुद्धिर्निरूप्यते। सा च 'जानामि' इत्यनुव्यवसायसिद्धा सर्वव्यापारहेतुः(१)। "प्रत्ययः शेमुषी धिषणा बुद्धिर्ज्ञानम्" इति च पर्यायाः।

### विभागः

तच्च ज्ञानं द्विविधम्। अपरोक्षं परोक्षं चेति। इन्द्रियजन्यं ज्ञानमपरोक्षम्। अत्र जन्यत्वमभिव्यक्त्युत्पत्तिसाधारणं विवक्षितम्। कूपखननाभिव्यक्ते जले तज्जन्यत्वव्यवहारदर्शनात्। तदपि द्विविधम्। आन्तरिन्द्रियजं बाह्येन्द्रियजं चेति। आन्तरिन्द्रियजमपि द्विविधम्। साक्षिजं मनोजमिति। तत्र साक्षिजं सुखादिज्ञानम्। मनोजमपि द्विविधम्। तत्तोल्लेखि तदनुल्लेखि चेति। तत्राद्यं 'सा गङ्गा', 'सा माता' इत्यादिस्मृतिः। द्वितीयं तु स्वाप्नगजादिज्ञानम्। नन्वस्य मनोजन्यत्वे स्मृतित्वतत्तोल्लेखित्वयोरापत्तिः। मैवम्। सुखदुःखादिज्ञानस्य मनोजन्यत्वेऽपि तदुभयादर्शनेन तस्य

---

1 बुद्धिर्ज्ञानम्। सर्वव्यवहारहेतुर्गुणः – पदार्थसङ्ग्रहे

तत्राप्रयोजकत्वात्। 'सा गङ्गा' इत्यादौ संस्कारप्रत्यासत्तिकमनोजन्यत्वस्यैव तत्प्रयोजकत्वदर्शनात्। तस्य चेह स्वाप्नगजादेर्मनोवासनामयत्वेनान्तरत्वात्, सुखादिवत्, साक्षात् मनोग्रहणयोग्यत्वात् संस्कारो न प्रत्यासत्तिः। एवं चोपादानस्य अन्यस्या -सम्भवात् संस्कारो गजाद्युपादानमात्रम्। न तु तद्ग्रहणे प्रत्यासत्तिः।

बाह्येन्द्रियजं ज्ञानमपि द्विविधम्। चेतनस्वरूपं वृत्तिरूपं चेति। तत्राद्यम् ईश-लक्ष्मी-ऋजु-तात्त्विक-अतात्त्विकयोगि-सात्विक-राजस-तामसभेदाद् अष्टविधम्।

### ईशज्ञानम्

[१]तत्राद्यं स्वपरगताखिलविशेषविषयम्। स्वतन्त्रज्ञानं वा। स्वातन्त्र्यं च ज्ञानस्य [२]स्वरूपप्रमितिप्रवृत्तिषु परानपेक्षत्वम्। तेन लक्ष्म्यादिज्ञानव्युदासः। ज्ञानपदेनेशव्युदासः। न च 'नेह नानास्ति किञ्चन'[३] इत्यादिश्रुत्या ईशतज्ज्ञानयोर्भेदाभावेन ज्ञानत्वमप्यस्तीति वाच्यम्। तथापि गुणगुण्यादिव्यवहारलक्षण-

---

1 तत्र सर्वार्थविषयकमीश्वरज्ञानम्। नियमेन यथार्थम्। तत्स्वरूपम् अनादिनित्यम्। निरतिशयस्पष्टं च – प्रमाणपद्धतौ

2 स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं स्वतन्त्रम्
– तत्वसङ्ख्यानटीकायां

3 काठकोपनिषदि २-१-११, बृहदारण्यकोपनिषदि ४-४-२१

भेदकार्यनिर्वाहकेण भेदप्रतिनिधिना विशेषेण निर्भेदेऽपि भगवति ज्ञानत्वाभावव्यवहारोपपत्तेः । यथा चैतत् तथोक्तम्, वक्ष्यते च ।

## लक्ष्मीज्ञानम्

(१)ईशज्ञानमात्रनिरूपितानधिकस्पष्टताश्रयत्वं लक्ष्मीज्ञानस्य लक्षणम् । तद्धि ऋजुज्ञानादिभ्योऽधिकस्पष्टमपि नेशज्ञानात् । ईशज्ञानवारणाय 'अनधिका' इति स्पष्टताविशेषणम् । ईशज्ञान-गता स्पष्टता सर्वापेक्षयाधिकैवेति तद्व्युदासः । तावत्युक्तेऽ-सम्भवः । यतो लक्ष्मीज्ञानम् ऋजुयोगिज्ञानाद्यपेक्षया अधिक-स्पष्टम् । अतः ईशज्ञाननिरूपितेति । तावत्युक्ते ऋजुयोगिज्ञाना-दावतिव्याप्तिः । अतो मात्रपदम् । (२)स्पष्टता च ज्ञानगतो धर्मविशेषः, न विषयकृतः कश्चिद्धर्मः । तेन तत्कृत्यादिव्युदासः ।

## ऋजुज्ञानम्

(३)ऋजवो नाम ब्रह्मत्वयोग्या जीवाः । योगो नाम समाधि-

---

1 ईश्वरे तु असार्वत्रिकमन्यत्रनालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् । तदपि नियमेन यथार्थम् । तत्स्वरूपमनादि नित्यं च । ईश्वरैकाधीनम् । तदपेक्षया स्पष्टत्वे न्यूनम् । – प्रमाणपद्धतौ.

2 स्पष्टत्वं च अपरोक्षत्ववज्ज्ञानगत एव विशेषो न विषयोपाधिकः – प्र.प.

3 योगप्रभावलब्धातिशयं योगिज्ञानम् । तत्त्रिविधम् । ऋजुयोगिज्ञानं तात्त्विक -योगिज्ञानम् अतात्त्विकयोगिज्ञानं चेति । ऋजवो नाम ब्रह्मत्वयोग्या जीवाः – प्र.प.

परिपाकः[१]। अपरोक्षज्ञानमिति यावत्। फलपर्यन्तो हि साधनेषु परिपाकः। समाधिश्च भगवति मनोऽभिनिवेशविशेषः। तस्य च फलमपरोक्षज्ञानमेव। तद्वन्तो योगिन उच्यन्ते। तथा च ऋजूनां योगिनां ज्ञानं ऋजुयोगिज्ञानमिति निर्वचनादेव ऋजुसम्बन्ध्यपरोक्ष-ज्ञानत्वं ऋजुयोगिज्ञानस्य [२]लक्षणं सिद्ध्यति।

यद्वा, अनादियोगप्रभावलब्धाभिव्यक्तिरूपातिशयोपेतम् ऋजु-योगिज्ञानम्। ननु 'क्रमेण वर्धमानम् आमुक्तेः, मुक्तावेकप्रकारम्'[३] इति ऋजुयोगिस्वरूपज्ञाने मुक्तिदशायाम् एकप्रकारत्वोक्त्या अतिशयाभावावगमादसम्भवीदं लक्षणमिति चेन्न। अतिशयवत्त्वं संसारदशायां विशेषणम्। मुक्तिदशायाम् उपलक्षणमिति लक्षण-सम्भवात्। मुक्तावेकप्रकारत्ववचनं प्रायिकमित्यपि[४] आहुः। ईशज्ञानस्य (नित्यं) स्वपरगताखिलविशेषविषयकत्वाद्यतिशयो-पेतत्वेन तद्वारणाय लब्धेति। तथाऽपि स्वरूपज्ञानस्य अनागन्तुक-विशेषवत्वादभिव्यक्तेति। नित्यस्यापि अभिव्यक्तिसम्भवात् ना-

1 समाधिपरिपाको योगः। समाधिपरिपाकवन्तो योगिनः इति विष्णुतत्व-विनिर्णयटीकोक्तेः। तत्सामर्थ्यलब्धोत्कर्षमित्यर्थः – प्रमाणपद्धतिभावदीपे।

2 ईश्वरादन्यत्रालोचने सर्वविषयं तज्ज्ञानम्। ईश्वरे त्वसार्वत्रिकमेव – प्र.प.

3 तत्र स्वरूपमनादिनित्यम्। योगप्रभावादामुक्तेर्व्यक्त्यतिशयोपेतम्, मुक्तौ तु एकप्रकारम् – प्र.प.

4 अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत्।
कादाचित्कविशेषस्तु नैव तेषां विरुद्ध्यते ॥– सूत्रभाष्ये (४-४-२२)

सम्भवः । तथाऽपि आलोकादिसहकारिलब्धोऽभिव्यक्तिविशेष इत्यस्मदादिघटादिज्ञानेऽतिव्याप्तिः । ततो योगप्रभावेति । तथापि तात्त्विकयोगिज्ञाने तदप्यस्तीत्यनादीति । न च योगः तात्त्विकयोगिनामनादिः । 'दशकल्पं तपश्चीर्णम्' इत्यादेः सादित्वावगमात् । ऋजूनां तु 'सहसिद्धं चतुष्टयम्' इत्युक्तेरनादिरेवेति नासम्भवः ।

ननु योगप्रभावेन सर्वार्थविषयकतारूपातिशयो हि लब्धव्यः । न चैतद् ऋजुयोगिस्वरूपज्ञाने सम्भवति । तज्ज्ञानस्य सर्वदा सर्वार्थविषयीकरणस्वाभाव्यात् । अनादेरन्याधीनत्वानुपपत्तेश्च । उच्यते – अधिकार्थविषयीकरणसमर्थस्यापि प्रतिबन्धकदशायां तदभावदर्शनेनान्धकारावृतस्य घटस्य सतोऽपि दीपप्रकाशादिभिरभिव्यक्तिरिव योगेनाभिव्यक्तिरपेक्षितैव । अनादेरपि सर्वार्थविषयीकरणसामर्थ्याख्यातिशयस्य तदीययोगाधीनत्वं चोक्तम् । यथाऽनादेः प्रागभावादेः प्रतियोग्यधीनत्वम् ।

ननु स्वरूपज्ञानाभिव्यक्तौ तद्गतसर्वविषयीकरणसामर्थ्याभिव्यक्तौ वा न योगप्रभावोऽपेक्षितः । साक्ष्येव हि स्वरूपज्ञानम् । स च 'घटमहं जानामि' इत्यनुव्यवसाय एव । तस्य च विषया आत्मसुखादयः, तद्धर्माश्च साक्षिणा गृह्यन्ते, न तु निमित्तान्तरमपेक्षन्ते । तत्कथं तदभिव्यक्तेर्योगाधीनत्वम् । उच्यते – सत्यमेवम् । तथापि देशकालादिव्यवहितमेरुगुहान्तर्वर्तिवस्तूनां

साक्षिविषयत्वायोग्यानां विषयीकरणे योगोऽपेक्षित एव। एवमन्यत्रापि।

## तात्त्विकयोगिज्ञानम्

[1]अनादियोगप्रभावलब्धाभिव्यक्तिरूपातिशयवत्त्वं तात्त्विकयोगिज्ञानस्य लक्षणम्। नन्विदं ऋजुयोगिज्ञानस्य लक्षणम्। सत्यम्। अनादित्वं द्विविधम्। मुख्यामुख्यभेदात्। निरवधिकानादित्वं मुख्यम्। अवधिमत्त्वेऽपि बहुकालीनत्वममुख्यत्वम्। इह लक्षणेऽमुख्यानादित्वं विवक्षितम्। पूर्वलक्षणे मुख्यानादित्वम् इत्युभयोर्भेदः।

## अतात्त्विकयोगिज्ञानम्

[2]सादित्वे सति योगप्रभावलब्धाभिव्यक्तिरूपातिशयवत्त्वम् अतात्त्विकयोगिज्ञानस्य लक्षणम्। नन्वनादिजीवाभिन्नं स्वरूपज्ञानं कथं सादि। उच्यते- यथा ऋजुयोगिज्ञानं निरवधिकानादिकालीनत्वात् मुख्यानादि, यथा वा तात्त्विकयोगिज्ञानममुख्यानादि, न तथाऽतात्त्विकयोगिज्ञानम्। किन्तु, एतत्कल्पीययोगेनैवाभिव्यज्यत इत्यनया विवक्षया सादित्वोक्तिर्न विरुद्ध्यते[3]। अत्र

1 तदतिरिक्तास्तत्त्वाभिमानिनो देवास्तात्त्विकाः। अनादित्वे सति ईश्वरादन्यत्रालोचनेऽप्यसर्वविषयं तज्ज्ञानम्। – प्र.प.

2 तद्व्यतिरिक्ताः देवादयो योगिनोऽतात्त्विकाः। सादित्वे सति ईश्वरादन्यत्राल्पाज्ञानयुक्तं तज्ज्ञानम् – प्र.प.

3 तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षया – प्र.प.

त्रिष्वपि लक्षणेषु विवक्षितस्य त्रिविधस्यानादित्वस्यापि बाह्यजन्य-ज्ञानेष्वभावान्नातिव्याप्तिः ।

### सात्त्विकादिज्ञानम्

[1]ईश्वरादन्यत्र प्रचुराज्ञानसहितजन्यज्ञानत्वं सात्विकादि-चेतनत्रयस्वरूपज्ञानस्य लक्षणम् । तज्ज्ञानेष्वज्ञातांशा बहवः, ज्ञातांशास्त्वल्प एवेति लक्षणसमन्वयः ।

### वृत्तिज्ञानम्

वृत्तिरूपं ज्ञानमपि ऋजु-तात्त्विक-अतात्त्विक-सात्त्विक-राजस-तामसभेदात् षड्विधम् । अत्राभिव्यक्तिपदस्थाने जन्यपद-प्रक्षेपेण ऋजुज्ञानादीनां वृत्तिरूपाणां षण्णां लक्षणान्यूह्यानि । तदेवमपरोक्षज्ञानं निरूपितम् ।

### परोक्षज्ञानम्

इन्द्रियाजन्यं जन्यं(?) ज्ञानं परोक्षज्ञानम् । तद् द्विविधम् । लिङ्गजं शब्दजं चेति ।

पुनर्ज्ञानं द्विविधम् । **प्रमा भ्रमश्चेति** । यथार्थज्ञानं प्रमा । तद्वति

---

व्यक्तिरर्थविषयीकरणं तस्यानादितः सर्वजीवसाधारण्येन स्वयोग्यात्मनस्त-द्धर्मादिविषयीकरणसत्त्वेऽप्ययोग्यविषये योगप्रभावाधीना व्यक्तिः कदाचिदस्तीति भावः ।

1 तद्व्यतिरिक्ताः जीवाः अयोगिनः । ईश्वरादन्यत्र अज्ञानप्रचुरं तज्ज्ञानम् । अयोगिनोऽपि त्रिविधाः । मुक्तियोग्याः नित्यसंसारिणः तमोयोग्याश्चेति – प्र.प.

तत्प्रकारकम् इति यावत्। तद्भिन्नज्ञानं भ्रमः। सोऽपि द्विविधः। संशयो विपर्ययश्चेति। एकस्मिन् धर्मिणि **विरुद्धनानाकोटिकज्ञानं संशयः**[१]। तस्य च साधारणधर्म- असाधारणधर्म- विप्रतिपत्ति-उपलब्धि-अनुपलब्धिरूपाणि पञ्चकारणानीत्याहुः। असाधारणधर्मादीनां कोट्युपस्थापकत्वसाम्येन साधारणधर्म एवान्तर्भावात् साधारणधर्म एक एव संशयकारणमिति तत्त्वम्[२]।

**विपरीतनिश्चयो विपर्ययः**। सोऽपि गृह्यमाणारोपः, स्मर्यमाणारोपश्चेति द्विविधः। आद्यो यथा– "लोहितः स्फटिकः" इति। अत्र हि जपाकुसुमे गृह्यमाणं लौहित्यं स्फटिक आरोप्यते। अत एवायं सोपाधिकभ्रम उच्यते। द्वितीयो यथा –"शुक्तिकायामिदं रजतम्" इति। अत्र ह्यापणादावनुभूतरजतस्मरणेन अत्यन्ता -सद्रजतमारोप्यते।

तत्र राजसतामसस्वरूपज्ञानद्वयं विहाय स्वरूपज्ञानषट्कं प्रमैवेति नियमः। राजसादिस्वरूपज्ञानद्वयमप्रमैवेति नियमः। तत्रापि राजसज्ञानं संशय एव। तामसज्ञानं विपर्यय एव। ऋज्वादीनां षण्णां मध्ये तात्विकादीनां परोक्षापरोक्षभेदेन द्विविधमपि वृत्तिज्ञानं प्रमा भ्रमश्चेति द्विविधम्। तद्वति तत्प्रकारकं चेत्, प्रमा। विपरीतं चेत्, भ्रम इति व्यवस्था।

---

1 अनवधारणं ज्ञानं संशयः – प्र.प.

2 अत्राधिकं तु प्रमाणपद्धतौ द्रष्टव्यम्।

एवमनेकविधेषु ज्ञानेषु यत्प्रमारूपं ज्ञानं तत्प्रमाणमुच्यते। अन्यत् स्वरूपास्वरूपभेदभिन्नं संशयादिरूपं ज्ञानमप्रमाणम्।

## प्रमाणसामान्यलक्षणं परीक्षा च

ननु 'प्रमाकरणं प्रमाणम्' इति **तार्किकाः** सङ्गिरन्ते। तत् कथं प्रमैव प्रमाणम्। सत्यम्। प्रमाणविशेषलक्षणं चैतत्। न तु प्रमाणसामान्यलक्षणम्। किं तत् सामान्यलक्षणमिति चेत्, याथार्थ्यमिति गृहाण। यथावस्थितज्ञेयविषयीकारित्वमिति यावत्।

नन्वत्र 'प्रमितिः प्रमाणम्' इति भावे प्रमाणशब्दं व्युत्पाद्य, किं प्रमितिर्लक्ष्यम्, उत प्रमीयतेऽनेनेति करणम्, अथवा प्रमीयतेऽत्रेत्यधिकरणम्, आहोस्वित् नैघण्टुकरीत्या प्रमिनोतीति कर्ता। नाद्यः। चक्षुरादावपि शास्त्रे प्रमाणत्वव्यवहारेण तदसङ्ग्रहापत्तेः। तत्रेष्टापत्तौ वक्ष्यमाणरीत्या तत्र लक्षणस्य अतिव्याप्तिः स्यात्। न द्वितीयः। यथार्थज्ञानस्यापि शास्त्रे प्रमाणत्वेन व्यवहारात् तदसङ्ग्रहापत्तेः। तत्रेष्टापत्तौ तूक्तो दोषः। न तृतीयः। शास्त्रे प्रमाधिकरणे भूतलादौ प्रमाणव्यवहाराभावेन तत्सङ्ग्रहायोगात्, योगे च निर्विषयत्वेन तत्त्वलक्षणस्यासम्भवः। अत एव न चतुर्थः। व्याकरणाविधानं चाधिकम्। यतः पाणिनिः 'भावे'[1] इत्यधिकृत्य 'करणाधिकरणयोश्च' इत्येवासूत्रयत्। न पुनः 'कर्तरि च' इति प्रमाणशब्दमनुशशास।

---

1 अष्टाध्यायी ३-३-१८

ननु यतः 'करणाधिकरणयोश्च' इत्यसूत्रयत् तत एवासूत्रयत् 'कर्तरि च' इति। तथाहि- अधिकरणं नाम आधार एव। आधारश्च आश्रयः। स च क्वचित् कर्म। यथा "ओदनं पचति देवदत्तः" इत्यत्र ओदनः। अत्र हि पाको विक्लित्तिः तदाश्रय ओदन एव। क्वचित् कर्ता। यथा ओदनं भुङ्क्ते देवदत्तः इत्यत्र देवदत्तः। स हि भुजिक्रियाश्रयः। तथा च 'करणाधिकरणयोश्च' इति सूत्रे कर्त्रादेरपि ग्रहणसम्भवेन कर्तर्यपि ल्युड्विहित एवेति चेन्न। 'करणाधिकरणयोश्च'(१) इति सूत्रेऽधिकरणशब्देन 'आधारोऽधिकरणम्'(२) इति सूत्रे परिभाषितामुख्याधारत्वस्यैव विवक्षितत्वात्। व्याख्यातं चैवमेव "आधारोऽधिकरणमिति सूत्रममुख्याधारपरम्" इति। अन्यथा 'कटे शेते देवदत्तः', 'वने गाः सञ्चरन्ति' इत्यादौ कटादेः शयनक्रियां प्रति मुख्याश्रयत्वा -भावेन सप्तमी न स्यात्। स्याच्च देवदत्तादेर्मुख्याश्रयत्वात्। तस्मात् सप्तमी। तथा च लक्ष्यस्वरूपनिर्धारणमशक्यमिति चेत्।

अत्रोच्यते – शास्त्रीयव्यवहाराभावात् कर्त्रधिकरणयोरसङ्ग्राह्यत्वं यतः त्वयोपपादितम्, अतः अस्माकमर्धमवसितं भारस्य। तत्र शास्त्रे प्रमितौ तत्करणे च प्रमाणत्वव्यवहारात् तदुभयमपि लक्ष्यम्(३), नान्यतरदेव। 'अन्योन्यस्मिन्'(*) इति व्याप्तेः।

1 पा.सू. ३-३-११७

2 पा.सू. १-४-४५

3 प्रमितिः प्रमाणम्, प्रमीयतेऽनेनेति प्रमाणमिति भावकरणयोः प्रमाणशब्दस्य

उभयत्र लक्षणसमन्वयस्तु ज्ञानेच्छाकृतीनां सविषयत्वस्वाभाव्येन प्रमितौ साक्षात्, तत्करणे प्रमितिद्वारा परम्परयैव। यथाऽनुव्यवसाये साक्षाद् घटादिविषयीकारित्वाभावेऽपि व्यवसायद्वारा परम्परया घटादिविषयीकारित्वं तथा।

नन्वेवं ज्ञानद्वारा तत्करणे ज्ञेयविषयीकारित्ववत् कर्त्रधिकरणयोरपि ज्ञानद्वारा परम्परया ज्ञेयविषयीकारित्वसम्भवेन तत्रातिव्याप्तिः स्यात्। उच्यते – 'ज्ञानद्वारा ज्ञेयविषयीकारित्वं ज्ञानसाधन एवास्ति। न त्वन्यत्र' इत्यस्तिनियमः। अत एव ज्ञान -साधनशास्त्रस्यारम्भणीयत्वसिद्ध्यर्थं सविषयकत्ववर्णनं प्रत्यधिकरणं च। न पुनरन्यत्र ज्ञानसम्बन्धिनि सविषयत्ववर्णनम्। अन्यथा परम्परासम्बन्धकथोच्छेदप्रसङ्गः। तथाच ज्ञानाश्रयत्व -ज्ञानाधिकरणत्वरूपपरम्परासम्बन्धसद्भावेऽपि कर्त्रधिकरणादेर्ज्ञानसाधनत्वाभावेन परम्परया तत्र ज्ञेयविषयीकारित्वलक्षणस्यातिव्याप्तिवर्णनमसङ्गतम्।

इच्छाकृतिगत्यादीनां ज्ञानवत् सविषयकत्वस्वाभाव्येन धनघटग्रामादिरूपार्थविषयीकारित्वसद्भावेन इच्छादिषु अतिव्याप्तिवारणाय ज्ञेयपदम्। यद्यपि ज्ञेयत्वस्य केवलान्वयित्वेन धनादौ देवदत्तादिना ज्ञेयत्वमप्यस्ति। तथाऽपि पितरि वर्तितव्यम् इत्यादाविव [1]ससम्बन्धिकपदानां प्रकृतपरत्वस्वाभाव्येन इहापि

सामर्थ्यात् – न्या.सु.; (*) वाक्यमिदं सम्पातायातमिति भाति।

1 यथा हि पितरि साधुः, मातरि साधुरिति वाक्यं यत्किञ्चित् पित्रादौ साधुत्वेन

ज्ञेयपदस्य प्रकृतपुरुषपरत्वेन कामयितृकर्तृगन्तृपुरुषाद्यपेक्षया इष्टत्वकार्यत्वगम्यत्वादिकमेव धनादीनाम्, न तु तत्र तत्पुरुषज्ञेयत्वमस्तीति भवति ज्ञेयपदेन तद्व्युदासः ।

ज्ञेयविषयीकारित्वमात्रे कृते संशयविपर्ययतत्साधनेष्वतिव्याप्तिः । अतो यथावस्थितेति विशेषणम् ।

ननु सर्वं ज्ञानं यथार्थमेव । न तु कश्चित् ज्ञाने प्रभेदोऽस्तीति व्यावर्त्याभावाद् यथावस्थितपदं व्यर्थमेवेति चेन्न । ज्ञाने बहवः प्रभेदाः प्रामाणिकाः सन्ति । तथाहि –

किञ्चिज्ज्ञानं स्वार्थनिश्चायकम् । 'पृथुबुध्नोदरो घटः' इति । असम्भावनाशङ्काया अभावात् । किञ्चित् स्वार्थानिश्चायकम् । यथा सवितरि सुषिरज्ञानम् । असम्भावनाशङ्कायाः सद्भावात् । नहि क्वचित् सवितरि सुषिरं सम्भावयति । अथवा सत्यजलज्ञानं स्वार्थनिश्चयकम् । प्रवृत्तिसम्भवात् । किञ्चित् स्वार्थानिश्चायकम् । यथा मृगतृष्णायां जलज्ञानम् । प्रवृत्तिविसंवादात् । अथवा किञ्चित् स्वार्थनिश्चायकम् । यथा 'शुक्लः पटः' इत्यादि । पटे कदाऽपि शौक्ल्यानुभवविपरीतानुभवाभावेन तज्जनितसंस्काराभावात् ।

न पर्यवस्यति किन्तु स्वीये पित्रादौ । तत् कस्य हेतोः । पित्रादिशब्दानां सम्बन्धिशब्दत्वात् । सम्बन्धिशब्दानां ह्येषा महिमा । अन्यथा पितुर्धनमुपाद्द्यादित्यादौ बहुविप्लवः स्यात् । सति चैवं शब्दमहिमानमनाहृत्य प्रत्यवतिष्ठमानः छलवादितया जीयेत । – न्या.सु.

किञ्चित् स्वार्थानिश्चायकम्। यथा 'पीतः शङ्खः' इति। शङ्खे प्रागेव पैत्यविपरीतशौक्ल्यानुभवजनितविपरीतसंस्कारसद्भावात् **इत्येककोटिकज्ञाने प्रभेदाः**।

अथ **अनेककोटिकज्ञानेष्वपि सम्भाव्यते** प्रभेदाः। किञ्चित् द्विकोटिकम्। यथा "स्थाणुर्वा पुरुषो वा" इति। किञ्चित् बहुकोटिकम्। यथा "किमयं ब्राह्मणः क्षत्रियो वैश्यो वा" इति। किञ्चत् अनिर्दिष्टकोटिकम्। यथा "किंसञ्ज्ञकोऽयं वृक्षः" इति। किञ्चिदन्यतरकोटिप्रचुरम्। यथा "प्रायेणानेन देवदत्तेन भवितव्यम्" इति। न चैते प्रभेदा अप्रामाणिका इति वाच्यम्। 'एतावन्तं कालमेनं स्थाणुत्वपुरुषत्वादिना सन्दिहानोऽस्मि', 'मृगतृष्णादि जलत्वादिना विपर्यसितोऽस्मि' इत्यनुव्यवसायसिद्धत्वात्।

उदयनस्तु – [१]"प्रमाव्याप्तत्वं प्रमाणसामान्यलक्षणम्। यदेश्वरश्चक्षुरादिर्वा तदा प्रमा इति व्याप्तेरिदं लक्षणमीश्वरे चक्षुरादौ चास्ति" इत्याह। तन्न। 'यदा प्रमाता जीवः, प्रमेयो घटो वा तदा प्रमा' इति व्याप्तिसम्भवात् प्रमातृप्रमेययोरतिव्याप्तेः। नन्व-

---

1 'प्रमाव्याप्तं प्रमाणम्' इत्युदयनः। तदपि सर्वस्यापि प्रमेयस्येश्वरप्रमाव्याप्तत्वेन अतिव्यापकत्वादयुक्तम्। साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वं विवक्षितम् इति चेन्न। आश्रयग्रहणवैयर्थ्यात् ईश्वरस्यापि प्रामाण्यसिद्ध्यर्थं तदिति चेन्न। कर्तरि प्रमाणशब्दस्य अननुशासनात्। यथार्थज्ञानेष्वतिव्याप्तेश्च – प्र.प.

नेन साधनाश्रययोरन्यतरत्वमेव विवक्षितम्[1]। प्रमातृप्रमेययोर्न तदन्यतरत्वम्। आश्रयत्वाभावात्, साधनत्वाभावाच्चेति चेन्न। पूर्वोक्तरीत्या ईश्वरे शास्त्रीयप्रमाणशब्दव्यवहाराभावेन कर्तरि प्रमाणशब्दाननुशासनाच्च अलक्ष्यत्वेन, अप्रमायां च तदुभयसद्भावेन लक्ष्यत्वाच्च, ईश्वरप्रमायां चातिव्याप्त्यव्याप्त्योरापत्तेः[2]।

[3]'अनुभूतिः प्रमाणम्' इति प्रमाणसामान्यलक्षणमप्ययुक्तम्। 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्'[4] इत्यादिना मनोविवेको-क्तरीत्या च स्मृतेः प्रमाणत्वेन प्रमासाधनस्य चक्षुरादेश्च प्रमाणत्वेन तयोरव्याप्तेः। संशयविपर्ययोरतिव्याप्तेश्च।

[5]एतेन ज्ञातताप्राकट्यापरपर्यायस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं ज्ञानं प्रमाणम् इति निरस्तम्। वेदसमानार्थक-

1 साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वमिति यावत्।

2 लक्षणसत्त्वाच्च ईश्वरेऽतिव्याप्त्यानापत्तेः, अप्रमायामतिव्याप्त्यापत्तेरिति पाठः स्याद्वा?

3 अनुभूतिः प्रमाणम्। स्मृतिव्यतिरिक्तं ज्ञानम् अनुभूतिरिति प्राभाकराणां लक्षणम् — प्र.प.

4 स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम्।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः॥

5 ज्ञातताप्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणम् इति भाट्टानां लक्षणमप्ययुक्तम्। ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणभावेना- सम्भावितत्वात्। अतीतादिविषयज्ञानानामाश्रयाभावेन तज्जनकत्वायोगाच्च। वेदादिष्व- व्याप्तेश्च। — प्र.प.

स्मृतिपुराणवाक्यं प्रमाणमिति तत्राव्याप्तिश्चेति सङ्क्षेपः। तदेवं दुर्मतविषतरूद्दाहदक्षप्रमाणज्वालामालाधरोक्तः पन्थाः सुपन्थाः।

## प्रमाणविभागः

तच्च प्रमाणं द्विविधम्। केवलप्रमाणम् अनुप्रमाणं चेति। साक्षाज्ज्ञेयविषयीकारित्वात् केवलस्य प्रथममुद्देशः। तद्द्वारैव ज्ञेय -विषयीकारित्वात् तदनन्तरमनुप्रमाणस्य।

### केवलप्रमाणम्

तत्र यथार्थज्ञानत्वं केवलप्रमाणस्य लक्षणम्। यथावस्थित-ज्ञेयविषयीकारित्वे सति ज्ञानत्वम् - इति यावत्। यथावस्थिते-त्यनेन संशयविपर्यययोः स्वरूपास्वरूपयोर्व्युदासः। ज्ञानत्वम् इत्यनुप्रमाणस्य।

ननु अनुमितिशाब्दप्रमितिसाधनयोरनुप्रमाणयोः धूमज्ञानशब्द -ज्ञानयोः यथावस्थितज्ञेयविषयीकारित्वे सति ज्ञानत्वमप्यस्तीति तयोरतिव्याप्तिरिति चेन्न। साक्षाज्ज्ञेयविषयीकारित्वस्य ज्ञानपदेनैव विवक्षितत्वात्। धूमादिज्ञानं धूमादिकमिव न ज्ञेयवह्न्यादिस्वरूपं साक्षाद् विषयीकरोति। किन्तु चक्षुरादिवत् वह्न्यादिज्ञानसाधनत्व-रूपपरम्परासम्बन्धेनैवेति भवति तद्व्युदासः। तर्हि घटज्ञानादेरिव धूमज्ञानादेरपि केवलप्रमाणत्वेन लक्ष्यत्वात् तत्रोक्तरीत्या साक्षा-ज्ज्ञेयविषयीकारित्वाभावादव्याप्तिः स्यादिति चेन्न। [1]धूमज्ञानादेः

1 लिङ्गज्ञानं वाक्यज्ञानं च लिङ्गिनि वाक्यार्थे च अनुप्रमाणमपि लिङ्गे वाक्ये

साक्षाद् वह्न्यादिविषयीकारित्वाभावेऽपि स्वस्वविषये साक्षाज्ज्ञेय-विषयीकारित्वानपायात्। इदं च लक्षणम् ईश्वरादिसात्त्विकान्त-चेतनस्वरूपेषु षट्सु विरिञ्चादितामसान्तचेतनसम्बन्धिवृत्तिरूपेषु षट्सु यथार्थज्ञानेषु चोक्तरीत्याऽनुसन्धेयम्।

**केवलप्रमाणविभागः**

तच्च केवलं त्रिविधम्। प्रत्यक्षानुमितिशाब्दभेदात्। यद्यपि उक्तरीत्या प्रत्यक्षज्ञानादीनि अनन्तानि। तथाऽपि प्रत्यक्षत्वानु-मितित्वशाब्दत्वरूपमानविभागजकोपाधित्रैविध्येन प्रत्यक्षादिज्ञान-राशित्रैविध्यसम्पादनसम्भवेन त्रैविध्योक्तिः। एवमन्यत्राप्यनुसन्धे-यम्।

**प्रत्यक्षस्य प्रथमोद्देशत्वे बीजम्**

अत्र प्रत्यक्षस्यानुमितिं प्रति कारणत्वात् प्रथममुद्देशः। अनुमितेस्तु तज्जन्यत्वात् पश्चादुद्देशः। 'विमतं प्रत्यक्षम् अनु-मितेः प्रथममुद्देष्टव्यम् अनुमितिजनकत्वात्, यद्यज्जनकं तत् ततः प्रायेण प्रथममुद्देष्टव्यम्, यथा गुणाद् द्रव्यम्', 'विमतानुमितिः प्रत्यक्षात् पश्चादुद्देष्टव्या तज्जन्यत्वात्, यद्यज्जन्यं तत् ततः प्रायेण पश्चादुद्देष्टव्यं यथा गुणः' इति प्रयोक्तव्यम्।

नन्वाद्ये प्रयोगे अनुमितिजनकत्वहेतुपक्षे प्रत्यक्षे भागा-सिद्धः।'अयं घटः' इत्यादेः 'सुरभिश्चन्दनखण्डः' इत्यादेः

च केवलप्रमाणमिति नातिव्याप्तिः – प्र.प.

परमाण्वाद्यतीन्द्रियगोचरानुमितिविषयकानुव्यवसायादेश्च प्रत्यक्षस्य अनुमितिजनकत्वाभावात्। भागासिद्धस्य अदोषत्वमङ्गीकृत्य कतिपयस्य पक्षादिप्रत्यक्षस्य अनुमितिजनकत्वदर्शनमात्रेण प्रथमोद्देष्टव्यत्वसाधनेऽनुमितेरपि तदापत्तिः। 'सुरभिश्चन्दनखण्डः' इति प्रत्यक्षं प्रत्यनुमितिगोचरानुव्यवसायप्रत्यक्षं प्रति चानुमितेर्जनकत्वदर्शनात्। द्वितीयोऽपि हेतुरसिद्धः। 'आकाशं नित्यं निरवयवद्रव्यत्वात्' इत्यनुमितेः प्रत्यक्षजन्यत्वाभावात्।

अत्र केचिदाहुः – "यद्यपि प्रत्यक्षत्वावच्छिन्नप्रत्यक्षं सर्वमुक्तव्यभिचारादेव नानुमितिजनकम्। तथाऽपि प्रत्यक्षैकदेशस्य पक्षादिप्रत्यक्षस्य तद्दर्शनेन तदितरस्य तज्जातीयत्वेन तत्साधकत्वोपपत्तिः। अनुमितेस्तु प्रत्यक्षजन्यत्वाव्यभिचार एव। 'आ-काशं नित्यम्' इत्याद्यनुमितेरप्यन्ततः प्रत्यक्षमूलत्वात्। तथा च प्रत्यक्षत्वरूपमानविभाजकोपाध्यवच्छिन्नस्य प्रत्यक्षस्यानुमितिं प्रति जनकत्वाभावेऽपि अनुमितित्वरूपमानविभाजकोपाध्यवच्छिन्नानुमितेः प्रत्यक्षजन्यत्वाव्यभिचारादनुमितेः पश्चादुद्देशः" – इति।

तन्न। द्वितीयप्रयोगस्य व्यभिचारादिपरिहारेण साधुत्वसाधनेऽपि प्रथमप्रयोगे व्यभिचारादेरपरिहृतत्वेन साधुत्वायोगात्। 'प्रत्यक्षं प्रथमं प्रयोक्तव्यम्, प्रत्यक्षत्वावच्छिन्नप्रत्यक्षस्यानुमितिजनकत्वात्' इत्यवश्यं वक्तव्ये 'अनुमितित्वावच्छिन्नानुमितेः प्रत्यक्षजन्यत्वाव्यभिचारात्' इति हेतूकरणस्य व्यधिकरणत्वाच्च।

यच्चोक्तम् – तज्जातीयत्वेन तदपि साध्यत इति, तच्च अनुमिते-रप्युक्तरीत्या (क्वचित्) प्रत्यक्षजनकत्वात् तदितरानुमितेस्त-ज्जातीयत्वेन तज्जनकत्वसम्भवेन प्रथमोद्देशापत्तेरपरिहार्यत्वात् - इति।

अत्रोच्यते – मानविभाजकोपाध्यवच्छिन्नस्य प्रत्यक्षस्यानु-मितिजनकता अस्त्येव। 'अयं घटः' इत्यादिप्रत्यक्षस्य 'घटो द्रव्यं पार्थिवः जलाहरणसमर्थो वा घटत्वात्' इत्याद्यनुमितिं प्रति, 'सुरभिश्चन्दनखण्डः' इति प्रत्यक्षस्य 'विमतं सुखसाधनमुपा-देयं वा सुरभिचन्दनखण्डत्वात्' इत्याद्यनुमितिं प्रति, 'परमाण्वती-न्द्रियानुमितिज्ञानवानहम्' इत्याद्यनुव्यवसायप्रत्यक्षस्य 'विमतं प्रमाणम् अनुव्यवसायत्वात् प्रत्यक्षगोचरानुमितिव्यवसायवत्' इत्याद्यनुमितिं प्रति, जनकत्वसम्भवात्। न ह्यनादौ संसारे कदापि कश्चिदप्येवं नानुमिनोतीति शक्यतेऽध्यवसितुम्। उक्तं च–

प्रत्यक्षसिद्धमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः।
प्रत्यक्षेण करिणि दृष्टेऽपि चीत्कारेणानुमिमतेऽनुमातारः॥
इत्यादि।

न चैवंविधानुमितिर्यस्य पुंसो न जायते तदीयप्रत्यक्षेण न जनकतानुमितिरिति वाच्यम्। येनायं घटो नोत्पद्यते तद्दण्डस्य घटकारणत्वाभावप्रसङ्गात्। न चेष्टापत्तिः। दण्डत्वेन घटत्वेन

कार्यकारणभावाङ्गीकारविरोधात्। दण्डमात्रे घटमात्रजननयोग्यता-ऽस्तीति न दोष इति चेत्। इहापि तथाऽस्तु। अन्यथा उत्पन्न-विनष्टघटादौ गुणाश्रयत्वाभावप्रसङ्गात्। प्रत्यक्षत्वानुमितित्व-रूपमानविभाजकोपाधिभ्यामेव जन्यजनकाभावसम्भवे उक्तकुसृष्टि -मार्गानुसरणायोगश्चेति सङ्क्षेपः।

**सकलप्रत्यक्षाणामपि प्रबलप्रत्यक्षान्तरेणैव बाध्यत्वस्योपपादनम्**

किञ्च, अस्ति प्रत्यक्षस्य स्वान्याबाध्यत्वरूपातिशयः। अत एव प्रत्यक्षभ्रमः 'पीतः शङ्खः' इत्यादि 'श्वेतः शङ्खः' इति प्रत्यक्षविशेषदर्शनेनैव निवर्तते, न त्वन्येन 'शङ्खः श्वेतः शङ्खत्वा-त्' इत्यनुमानेनाप्तवाक्येन वा, अन्येनानुमानिकेन शाब्देन वा ज्ञानेन। यद्यपि चन्द्रप्रादेशत्वादिप्रत्यक्षं शाब्देन विशेषदर्शनेन निवर्तते। तथाऽप्यन्त श्रोत्रप्रत्यक्षमूलमेव तदिति वा, अपटु-प्रत्यक्षत्वात् स्वयमेव बाधितं वोत्पद्यते तदनन्तरमुत्पद्यमानं शाब्दविशेषदर्शनं तद्बाधकमिवोच्यते[१] इति न कोऽपि दोषः।

1 न च प्रत्यक्षदृष्टस्य ततो बलवत्प्रत्यक्षमागमं विना अनुमानादिनैव बाधो दृष्टः। दूरस्थवृक्षह्रस्वत्वादौ प्रत्यक्षापटुत्वस्य निश्चितत्वाद् युक्त्यातत्र दीर्घत्वनिश्चयः। प्रत्यक्षस्य हि दूरे मन्दग्राहित्वं परिमाणादावन्यथात्वं च ततो बलवत्प्रत्यक्षणैव निश्चितम् – वि.तत्वविनिर्णये।

* इदमुक्तं भवति – द्विविधं ज्ञानं डोलायमानं एकाकारविषयं च। तत्राद्यं सन्देह इत्युच्यते। द्वितीयमपि द्विविधम्। किञ्चत्स्वार्थस्य निश्चायकं यथा भवत्येवायं स्तम्भ इति। किञ्चित्स्वार्थमेकाकारतयोल्लेखादपि नावधारयति यथा

अनुमानागमयोस्तु प्रत्यक्षेणैव बाध्यता। 'तेजोऽनुष्णं पदार्थत्वात्' इत्यादौ प्रत्यक्षादन्यस्य तद्बाधकत्वादर्शनात्। तथा चेत्थमतिशयवत्त्वात् प्रथमोद्देश उक्तः।

ततः शाब्दस्यानुमानानुग्राह्यत्वात्, अनुमितेश्च तदनुग्राहकत्वात् तदनन्तरं शाब्दस्योद्देशः।

## प्रत्यक्षजन्यज्ञाननिरूपणम्

तत्र [1]निर्दोषार्थेन्द्रियसन्निकर्षापेक्षं ज्ञानं **प्रत्यक्षम्**। अत्र निर्दोषपदम् अर्थेन्द्रियोभयविशेषणम्। तेन [2]काचकामलादिदोष-

---

सवितरि सुषिरमित्यादि। स चायं भेदः क्वचित्सम्भावनासम्भावनाभ्यां भवति। क्वचित्परीक्षापेक्षायामपि तत्प्रवृत्त्यप्रवृत्तिभ्याम्। क्वचित्प्रागेव विपरीतसंस्कारभावाभावाभ्याम्। तत्राद्यं निःशङ्कप्रवृत्तिहेतुत्वात्पटुशब्देनोच्यते, द्वितीयं तु तदहेतुत्वादपटुशब्देन। दूरस्थवृक्षह्रस्वादिविषयं च यद्दूरस्थत्वादिदोषयुक्तं तन्मन्दग्राहि। तत एव परिमाणादावयथार्थमित्यन्वयव्यतिरेकानुगृहीतेन साक्षिणा सामान्यतो निश्चितत्वाद् विपरीतसंस्कारसद्भावादेकाकारविषयतया जायमानमप्यनिश्चयादेव निःशङ्कप्रवृत्त्यकारणं बाधितप्रायं जायते। ततः परं प्रवर्तमानावनुमानागमौ तेन दत्तावकाशौ दीर्घत्वादिनिश्चयं कुर्वाणौ तद्बाधकाविवोच्येते। अतो नैतत् प्रत्यक्षस्यानुमानागमबाध्यत्वे निदर्शनमिति – विष्णुतत्वविनिर्णयटीकायाम्।

1 निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमिति गीयते। – अनु.

* उद्भवशब्दस्य उत्पत्त्यभिव्यक्त्यन्यतरार्थत्वात् – न्या.सु.

2 निर्दोषाक्षोद्भवमप्यर्थदोषादयथार्थमुत्पद्यते ज्ञानम्। यथोक्तम् –
अतिदूरादतिसामीप्यादिन्द्रियदोषान्मनोऽनवस्थानात्।

रहितस्येन्द्रियस्य अतिसामीप्य-अतिदूरस्थत्व-अतिसूक्ष्मत्व-अतिस्थूलत्वादिदोषयुक्तार्थेन सन्निकर्षः, अतिसामीप्यादिदोषरहितेनार्थेन काचकामलमनोऽनधिष्ठितत्वादिदोषयुक्तेन्द्रियस्य सन्निकर्षश्च व्यावर्त्यते। ज्ञानपदेन इच्छाकृत्यादेर्व्यावृत्तिः। स्वरूपास्वरूपप्रत्यक्षज्ञानयोः सङ्ग्रहाय जन्यं ज्ञानमित्यनुक्त्वा सन्निकर्षापेक्षज्ञानमिति सामान्योक्तिः। स्वरूपज्ञानस्यानादिनित्यत्वेऽपि संसार-स्याविद्यासापेक्षत्ववत् प्रागभावस्य प्रतियोगिसापेक्षत्ववच्चेन्द्रियसन्निकर्षसापेक्षत्वोपपत्तिः। ज्ञानमित्येवोक्ते अनुमित्यादावतिव्याप्तिः। अतः सन्निकर्षापेक्षेति। तावन्मात्रोक्तौ धूमाग्न्योः व्याप्तिरूपसन्निकर्षापेक्षत्वात्पुनस्तदवस्थो दोषः। अत इन्द्रियसन्नि-कर्षेति। आत्मेन्द्रियसन्निकर्षमादाय पुनस्तदवस्थो दोष इति अर्थेत्येवं सर्वं सार्थकम्।

### स्वमतरीत्यासन्निकर्षविचारः

अत्र सन्निकर्षो नाम सम्बन्धः। तत्वं च विशिष्टप्रतीतिनिर्वाहकत्वम्। स च सम्बन्धो द्विविधः। लौकिकोऽलौकिकश्चेति। लौकिकोऽपि द्विविधः संयोगसम्बन्धः, स्वरूपसम्बन्धश्चेति। तत्राद्यो 'भूतले घटोऽस्ति' इत्यादिप्रत्यक्षजनकः भूतलघटयोः सम्बन्धः। द्वितीयस्तु 'मामहं जानामि' इत्यादिप्रत्यक्षजनक आत्मेन्द्रियसम्बन्धः।

---

सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिघाताच्चेति – न्या.सु. २-१-२

अलौकिकस्त्रिविधः । योगप्रभावः सामान्यं ज्ञानं चेति । तेन योगिनः अतीतानागतपदार्थेन तदिन्द्रियस्य संयोगसम्बन्धाभावेन तत्प्रत्यक्षज्ञानानुपपत्तिरिति निरस्तम् । संयोगाभावेऽपि योगजन्यादृष्टस्यैव तदिन्द्रियार्थयोर्विशिष्टव्यवहारनिर्वाहकत्वेन सम्बन्धत्वात् तदीयज्ञानस्य प्रत्यक्षत्वोपपत्तेः । अत एव महानससन्निकृष्टधूमे व्याप्तिं गृह्णतः पुरुषस्येन्द्रियेण देशान्तरस्थधूमस्य संयोग-सन्निकर्षाभावेन व्याप्तिप्रत्यक्षानुपपत्तिरिति निरस्तम् । इन्द्रियसन्निकृष्टधूमसादृश्यापरनामकसामान्यस्यैव तत्र विशिष्टप्रतीतिनिर्वाहकत्वात् । अत एव 'घटमहं जानामि' इति प्रत्यक्षस्यानुपपत्तिः, साक्षिरूपेन्द्रियेण घटादिरूपार्थस्य सन्निकर्षाभावादिति निरस्तम् । तद्व्यवसायरूपज्ञानस्यैव साक्षिघटयोर्विशिष्टव्यवहारनिर्वाहकत्वात् ।

## नैयायिकाभिमतषड्विधसन्निकर्षनिरासः

"अत्र सन्निकर्षः सम्बन्धिभिन्नः सम्बन्ध्याश्रित एको व्यासज्यवृत्तिः सम्बन्धः । स च षड्विधः । संयोगः, समवायः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । संयोगात् 'अयं घटः' इति, समवायात् 'अयं गकार' इति, तृतीयात् 'नीलो घटः' इति, चतुर्थात् 'नीले नीलत्वम्' इति, पञ्चमात् 'शब्दे शब्दत्वम्' इति, षष्ठात् 'भूतले घटो नास्ति' इति प्रत्यक्षज्ञानम् । षष्ठोऽपि पञ्चविधः । संयुक्तविशेषणविशेष्यभावः, समवेतविशेषणविशेष्यभावः, संयुक्तसमवेतविशेषण-

विशेष्यभावः, संयुक्तसमवेतसमवेतविशेषणविशेष्यभावः, समवेत-समवेतविशेषणविशेष्यभावः। घट-गकार-रूपरूपत्व-गत्वेषु घट-त्वाभावप्रत्यक्षं क्रमात् तेभ्यः पञ्चसम्बन्धेभ्यो जायते" इत्यादि तार्किकरीतिस्तु, 'घटनिरूपितः संयोगो हि पटमात्रवृत्तिः, पट-निरूपितः संयोगश्च घटमात्रवृत्तिः। तथा च घटपटयोः संयोगो भेद इव प्रतिधर्मिविश्रान्तः, न द्वित्वादिवद् व्यासज्यवृत्तिः' इत्यादिना भूतविवेके प्रागेव निरस्ता।

(1)अन्ये तु – "निर्विकल्पकसविकल्पकभेदात् प्रत्यक्षं द्वि-विधम्। नामजात्यादिधर्मसामान्यानवगाहि वस्तुस्वरूपमात्रावगाहि ज्ञानं निर्विकल्पकम्। तच्चातीन्द्रियम्। 'दण्डीति विशिष्टज्ञानं विशेषणज्ञानसाध्यं विशिष्टज्ञानत्वात् इत्यनुमानगम्यम्" इत्याहुः। तन्न। वस्तुमात्रस्य यत्किञ्चिद्धर्मविशिष्टतया प्रतीयमानत्वेन निर्धर्म-कवस्तुमात्रज्ञानस्य सर्वानुभवविरुद्धत्वादिति। तान्त्रिकमनोरथ-सिद्धिर्यदि तर्हि सिद्धं निष्प्रकारकवेदान्तजन्यचरमवृत्तिवादिनां मतम्। अनुमानं तु सप्रकारकविशेषणज्ञानमादाय पर्यवसानान्न निष्प्रकारकज्ञानसाधकम्। आत्मविशेषगुणानां मानसप्रत्यक्षत्व-नियमेनातीन्द्रियत्वव्याघातश्चेति सङ्क्षेपः।

इति श्रीमत्पदार्थतीर्थीयविवेके(२) न्यायगर्भिते।
प्रत्यक्षं केवलं मानं समाप्तिमधुनाऽगमत्॥ ** ॥

---

1 तार्किकाः

2 पदार्थानां शास्त्रीयविवेचनात्मकेत्याशयः।

# अनुमानजन्यज्ञाननिरूपणम्

अथानुमितिरूपं यत् केवलं मानमुत्तमम् ।
सङ्क्षेपेणोच्यते तत्तु दशप्रमतिवर्त्मना ॥

निर्दोषलिङ्गजन्यं ज्ञानमनुमितिः । अत्र निर्दोषत्वग्रहणेन व्यभिचार्यादिलिङ्गव्यावृत्तिः । ननु लिङ्गं व्याप्यमिति पर्यायः । व्याप्तिर्व्याप्यत्वम् । न हि व्यभिचर्यादौ व्याप्तिरस्ति । तथा च लिङ्गपदेन तद्व्यावृत्तिसिद्धेः निर्दोषपदं व्यर्थम् । न । सर्वेषां हि शब्दानामाभासानाभासवाचित्वं ब्राह्मणशब्दस्य ब्रह्मकुलजमात्र-वाचिवत् । अत एव तत्राभासव्यावृत्तये 'अनूचानो ब्राह्मणः' 'समीचीनो ब्राह्मणः' इत्यादिविशेषणं दृश्यते । तद्वदिहापि आभासलिङ्गव्यावृत्तये निर्दोषत्वविशेषणम् । यदि आभासविविक्त एव शब्दार्थ इति मतं तदाऽनुपादेयमेव निर्दोषपदम् । अत एव 'उपपत्तिरनुमितिः' इत्येव क्वचिल्लक्षणोक्तिरपि दृश्यते । निर्दोष-लिङ्गजन्यध्वंसादिव्यावृत्तये ज्ञानपदम् ।

ननु अनुमितिसामान्यलक्षणान्तरानभिधानादिदमेव सामान्य-लक्षणमिति वक्तव्यम् । तथा च भ्रमानुमितावव्याप्तिः । मैवम् । भ्रमानुमितेर्लक्ष्यत्वासम्मतेः । न च सामान्यलक्षणानुपदर्शनं दोषः । आभासविवक्ततया लक्ष्यं ह्यवश्यं ज्ञातव्यमिति नियमेन तद्विघातकत्वेन सामान्यलक्षणकथनस्य दोषत्वात् प्रकृतानुप-

योगाच्च । अन्यथा प्रमाकरणत्वलक्षणस्य दुष्टेन्द्रियसाधारण्याभावेन अव्याप्तिदोषप्रसङ्गात् ।

नन्वथापि निर्दोषलिङ्गस्यानुमितिजनकत्वमनुपपन्नम् । निर्दोष-लिङ्गस्य धूमस्य पर्वते स्वतः सद्भावेऽपि गृहे विद्यमानस्य पुंसोऽनुमित्यनुदयेनान्वयतो व्यभिचारात् । अतीतानागतवह्न्यनुमितेरतीतानागतधूमाभावेऽपि जायमानत्वेन व्यतिरेकव्यभिचाराच्च, इति चेन्न । करणानां हि स्वतः सत्त्वमात्रेण न कार्यकारित्वम्, किन्तु सव्यापारीकृतानामेव । अन्यथा कुठारादीनां गृहे सत्वमात्रेणैव कार्योत्पत्तिप्रसङ्गः ।

## करणविभागः

करणं तु द्विविधम् । अज्ञातकरणं ज्ञातकरणं चेति । अत एव तद्व्यापारोऽपि द्विविधः । न त्वेकविधः । तथा च [1]अज्ञात-करणेषु कुठारादिषु उद्यमननिपतननैशित्यादिरूपो व्यापारः, चक्षुरादिषु उन्मीलनावलोकनार्थसन्निकर्षादिरूपो व्यापारः । एवम-ज्ञातकरणेष्वेव यागादौ भिन्नभिन्नव्यापारः । ज्ञातकरणेषु लिङ्गेषु शब्दादिषु च ज्ञानादिरूपो व्यापार इति सव्यापारीकृतस्य नान्वयतो व्यतिरेकतश्च व्यभिचारः । गृहे विद्यमानस्य धूमज्ञानाभावादनुमित्यभावेऽपि तज्ज्ञानवतोऽनुमितिदर्शनात् । अतीतानागत-

---

1 वक्ष्यमाणरीत्या ज्ञानात्मकव्यापारसहितं करणं ज्ञातकरणम् । ज्ञानभिन्न-व्यापारसहितं तु अज्ञातकरणमित्याशयः ।

धूमस्य स्वतोऽभावेऽपि सव्यापारीकृतस्य तस्य सद्भावात्। न ह्यतीतानागतधूमज्ञानं कस्यापि नास्तीति शक्यते वक्तुम्। ततोऽतीतादिवह्न्यनुमितिदशायां सव्यापारीकृतोऽतीतादिधूमोऽस्तीति कथं व्यभिचारः। अन्यथा यागस्यापि नश्वरत्वेन स्वर्गानुभवकाले सत्त्वाभावेन यागाभावे स्वर्गाभाव इति व्यतिरेकस्य व्यभिचारेण यागादेः स्वर्गादिकारणत्वं न स्यात्।

एतेन धूमोऽयमिति धूमप्रत्यक्षे विषयतया [१]धूमजन्येऽतिव्याप्तिः। धूमस्य वह्निलिङ्गत्वात् इन्द्रियार्थसन्निकर्षादिना सव्यापारीकृतत्वाच्चेति निरस्तम्। ज्ञातकरणाज्ञातकरणयोर्व्यापारनियमस्योक्तत्वात्। न हीन्द्रियार्थसन्निकर्षादिना सव्यापारीकृतोऽपि धूमः ज्ञानादिना ज्ञातकरणे क्लृप्तेन सव्यापरीकृतो भवति। सन्निकृष्ट एव धूमः स्वप्रत्यक्षहेतुः, न ज्ञातो हेतुरिति धूमप्रत्यक्षे नातिव्याप्तिः। लिङ्गत्वं कुत्र किं लिङ्गम् इत्यपेक्षायां धूमप्रत्यक्षावसरे धूमस्य विषयत्वं न लिङ्गत्वमित्यप्याहुः।

नन्वथापि धूमज्ञाने सत्यप्यगृहीतव्याप्तेः पुरुषस्यानुमित्यनुदयादन्वयतो व्यभिचारस्तदवस्थ एवेति चेन्न। न ह्यत्र ज्ञानमात्रं व्यापारः, किन्तु व्याप्यस्य पक्षवृत्तितया ज्ञानम्। न ह्यगृहीतव्याप्तेरेवंविधं ज्ञानमस्ति। तथाच, व्याप्तिप्रकारकपक्षधर्मताज्ञानेन

---

1 पूर्वोक्तस्यानुमितिलक्षणस्येत्याशयः।

सव्यापारीकृतस्य लिङ्गस्यानुमित्यव्यभिचारः। तथाऽपि 'पुरुषत्व-व्याप्यकरादिमानयम्' इति ज्ञानविषयीकृतस्य करादेः संशयोत्तरप्रत्यक्षजनकत्वेनानुमितिजनकत्वाभावेन च स दोषस्तदवस्थ इति चेन्न। पक्षतासहकृतोक्तज्ञानविषयीकृतलिङ्गजन्यत्वस्य विवक्षितत्वात्[१]।

ननु तथाऽपि धूलीपटले धूमभ्रमानन्तरं जायमानायां यादृच्छिकसंवादिन्यां च वह्न्यनुमितौ निर्दोषलिङ्गजन्यत्वाभावेनाव्याप्तिः। मैवम्। प्रवृत्तिसंवादेन प्रमात्वव्यवहारेऽपि वस्तुतः प्रमात्वाभावेनालक्ष्यत्वान्न दोषः।

यद्वा, [२]व्याप्तिस्वोचितवृत्तित्वोभयविशिष्टलिङ्गज्ञानजन्यज्ञानम् अनुमितिः। 'लिङ्गज्ञाने' इत्यनेनेन्द्रियजन्यज्ञानस्य, 'अयं धूमः' इति ज्ञानजन्यस्य 'धूमज्ञानवानहम्' इत्यनुव्यवसायस्य 'स्वोचित -वृत्तित्वविशिष्ट' इत्यनेन। धूमवान् पर्वतः इति ज्ञानजन्यस्य तदनुव्यवसायस्य च 'व्याप्ति' इत्यनेन व्युदासः। अधोदेशे नदीपूरज्ञानजन्योर्ध्वदेशवृष्ट्यनुमितौ अव्याप्तिवारणाय पक्षवृत्तीत्यनुक्त्वा 'स्वोचितवृत्ति' इत्युक्तम्। 'धूमो वह्निव्याप्तः द्रव्यवांश्चायम्'

---

1 एकवस्तुविषयकविभिन्नसामग्रीसमावेशस्थले प्रत्यक्षसामग्र्या अनुमिति-सामग्र्यपेक्षया प्रबलत्वादित्यपि ज्ञेयम्।

2 तथा च व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यज्ज्ञानं, सम्यज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयद् अनुमानम् इत्युक्तं भवति – प्र.प.

इति ज्ञानद्वयजन्यानुव्यवसायेऽतिव्याप्तिवारणाय 'उभयविशिष्ट' इति। उभयविशिष्टज्ञानानुव्यवसायवारणाय[1] 'अप्रतिबद्ध' इति उभयविशिष्टज्ञानविशेषणं देयम्। कामिनीजिज्ञासादिना प्रतिबद्धस्य परामर्शस्यानुमितिजनकत्वाभावेपि तदप्रतिबद्धस्यानुमितिजनकत्वनियमान्न कश्चिद्दोष इति सङ्क्षेपः।

## आगमजन्यज्ञाननिरूपणम्

अथ निर्दोषवाक्येन[2] जन्यं ज्ञानं तु केवलम्।
शाब्दप्रमितिरूपं तदुच्यते माध्वसंविदा॥

आकाङ्क्षायोग्यतासन्निधिमतां [3]पदानां समूहो वाक्यम्[4]। तेनानाकाङ्क्षत्वायोग्यत्वासन्निहितत्वादिदोषाणां निरासेऽपि वक्तृदोष-निबन्धनानां श्रोतृदोषनिबन्धनानां प्रसङ्गदोषनिबन्धनानां भ्रान्तिमूलत्वविप्रलिप्सामूलत्वपरिहासमूलत्वानां वाक्यदोषाणां निरासा-

---

1 लक्षणघटकलिङ्गज्ञाननिष्ठजनकतायां लिङ्गज्ञानत्वावच्छिन्नत्वं निवेशनीयम्। लिङ्गज्ञानस्य स्वानुव्यवसायं प्रति विषयत्वेन कारणत्वादुक्तलक्षणस्य तदनुव्यवसाये नातिव्याप्तिः।

2 निर्दोषः शब्दः आगमः। निरभिधेयत्वेन अन्वयाभावेन वाऽबोधकत्वं, विपरीतबोधकत्वं ज्ञातज्ञापकत्वम्, अप्रयोजनत्वम्, अनभिमतप्रयोजनत्वम्, अशक्यसाधनप्रतिपादनं, लघूपाये सति गुरूपायोपदेशनमित्यादिदोषरहितः शब्दः आगमः। निर्दोषं वाक्यमिति वा – प्र.प.

3 विभक्त्यन्ता वर्णाः पदम्।

4 आकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यम् – प्र.प.

योगेन 'निर्दोष'पदं सार्थकम्। यद्वा, उक्तरीत्या वाक्यशब्द-साधारण्येन वाक्याभासव्यावृत्तये निर्दोषपदम्, वाक्यध्वंसादि-व्यावृत्तये ज्ञानपदम्। 'घटमानय' इत्यादिवाक्यजन्ये घटकर्मका-नयनक्रियाकसंसर्गगोचरे ज्ञाने निर्दोषवाक्यजन्यज्ञानत्वमस्तीति लक्षणसमन्वयः। शिष्टमग्रे उच्यते।

## अनुप्रमाणम्

अथ [१]केवलप्रमाणसाधनमनुप्रमाणम्। 'साधनमि'ति केवल -व्युदासः। प्रमाणमिति कुठारादेः, दुष्टेन्द्रियादेश्च। साधनमिति कालादृष्टादेः। केवलप्रमाणत्रैविध्यादिदमनुप्रमाणं त्रिविधम्। प्रत्यक्षानुमानशब्दभेदात्।

### प्रत्यक्षम्

तत्राऽद्यं साक्षात्कारिप्रमासाधनम्। निर्दोषार्थेन्द्रियसन्निकर्ष इति यावत्। अत्रेन्द्रियपदेन ज्ञानेन्द्रियं विवक्षितम्। तेन न वागादीन्द्रियसन्निकर्षेऽतिव्याप्तिः। ज्ञानेन्द्रियं च साक्षिणा सहाष्ट-विधम्। तज्जन्यसाक्षात्कारिणी प्रमा तत्सन्निकर्षश्चाष्टविधः। तत्साधनत्वप्रकारश्चेन्द्रियेषूक्तरीत्या व्यापारद्वारोपपादनीयः।

यद्यपि 'अदुष्टमिन्द्रियं त्वक्षम्'[२] इत्यादौ इन्द्रियस्यैव

---

1 यथार्थज्ञानसाधनम् अनुप्रमाणम् – प्र.प.

2 विष्णुतत्वविनिर्णयोदाहृतब्रह्मतर्कवचनम्

प्रत्यक्षत्वमुक्तम्। तथाऽपीन्द्रियेण साक्षात्कारे जनयितव्ये सन्निकर्षो व्यापारः, परशोरिव दारुसंयोगः। 'न हि स्वाङ्गं स्वव्यवधायकम्' इति न्यायेन क्वचिद् धर्मिप्राधान्योक्तिः, क्वचिद् धर्मप्राधान्योक्तिश्च तत्र तत्र दृश्यत इति न विरोधः(१)।

## अनुमानम्

(२)अथानुमितिकरणमनुमानम्। यथा वह्न्याद्यनुमापकं धूमादि। ननु यत् कारणं तत् सन्निकृष्टमेव क्रियां साधयति। न चेन्द्रियार्थयोः सन्निकर्ष इव धूमाग्न्योः सन्निकर्षः संयोगः सम्भवति, घटादावतिप्रसक्तत्वात्। उच्यते – सन्निकर्षो हि अनेकविध इत्युक्तम्। प्रसिद्धसन्निकर्षाभावेऽपि, अव्यभिचरितसामानाधिकरण्यरूपसम्बन्धात्मकव्याप्तिरेव धूमाग्न्योः सन्निकर्षः। एतेन धूमादग्निज्ञानमिव घटज्ञानमपि स्यादिति निरस्तम्। वह्निनेव घटेन धूमस्य व्याप्तिरूपसम्बन्धाभावात्।

## व्याप्तिनिरूपणम्

सेयं व्याप्तिः (३)अविनाभावरूपा। अव्यभिचरितसामानाधि-

---

1 तत्र अवान्तरव्यापारप्राधान्यविवक्षया अर्थेन्द्रियसन्निकर्षः प्रत्यक्ष इत्युच्यते। क्वचित्तु धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टमिन्द्रियं प्रत्यक्षमित्युच्यते – प्र.प.

2 निर्दोषोपपत्तिरनुमानम्। उपपत्तिः व्याप्यं युक्तिर्लिङ्गमिति पर्यायः – प्र.प.

3 अविनाभावो व्याप्तिः। साहचर्यनियम इति यावत् – प्र.प.

करण्यमिति यावत्। अस्ति चासौ धूमे। यतो वह्निना विना धूमो न वर्तते महानसादौ। धूमेन सह महानसादौ वह्नेः सत्ताऽस्तीति व्यभिचारिणि वह्नौ व्याप्तिवारणाय अनेकनञ्घटितवक्रोक्तिः। धूमेन विना वह्नेरयोगोलकादौ सत्वेन, भवति तेन तद्व्युदासः। वह्न्यविनाभावस्य धूमस्वरूपत्वात्, धूमे लक्षणसमन्वयो न विरुद्ध्यते। तथाच व्याप्तिज्ञानेन सव्यापारीकृतं लिङ्गमनुमितिकरणत्वादनुमानमुच्यते।

ननु तथाऽपि धूमो वह्निव्याप्य इति ज्ञानमात्रादप्यनुमित्यापत्तिः। मैवम्। पक्षवृत्तित्वज्ञानस्याप्यपेक्षितत्वात्। ननु 'ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरात्' इत्यादिप्रयोगे नदीपूरवत्त्वहेतोः पक्षत्वेन निर्दिष्टे ऊर्ध्वदेशेऽभावेन न पक्षवृत्तित्वज्ञानं कारणमिति चेन्न। पक्षवृत्तित्वज्ञानपदेन स्वोचितदेशवृत्तित्वज्ञानस्य विवक्षितत्वात्। पक्षतया निर्दिष्टोर्ध्वदेशादौ वृत्तित्वज्ञानाभावेऽपि स्वोचिताधःप्रदेशवृत्तित्वज्ञानस्य सत्त्वात्। एवंजातीयस्य हेतोरधःप्रदेश एवोचितो देशः। न तूर्ध्वदेशः। तथैवानुमित्यनुभवात्। अनुभवानुसारिणी हि कल्पना।

एतेन 'शब्दोऽभिधेयः प्रमेयत्वात्' इत्यादौ प्रमेयत्वं यावति देशे व्याप्य वर्तते तावद्देशेऽभिधेयत्वं स्वसाध्यमनुमापयति, न तु धूमो हेतुः तद्वत् स्वावच्छिन्ने सर्वस्मिन्नपि देशे वह्निमनुमापयति। किन्तु प्रदेशविशेष एव। एवम् 'इदं संयोगि द्रव्यत्वात्' इत्यादौ

द्रव्यत्वरूपो हेतुः पक्षं व्याप्य वर्तमानोऽपि न सर्वत्र संयोगमनुमापयति। तस्य व्याप्यवृत्तित्वाभावात्। 'इदं द्रव्यं संयोगित्वात्' इत्यादौ संयोगित्वहेतुः स्वाश्रयादन्यत्र प्रदेशान्तरे द्रव्यत्वमनुमापयतीत्यादि वैषम्यं किन्निमित्तमिति चोद्यं निरस्तम्। तत्तद्धर्माणां भिन्नभिन्नस्वभावत्वेन व्याप्तिग्रहदशायां यादृशेन साध्येन यादृशस्य हेतोर्यादृशी सामानाधिकरण्यरूपा व्याप्तिः गृहीता, तादृशो हेतुः तादृशमेवं साध्यं तादृशसामानाधिकरण्यग्रहणानुसारेण गमयति न त्वन्यथेति नियमात्। तथाच, स्वोचिततत्तद्देशवृत्तित्वानुसारेण तत्तद्देशे तत्तत्साध्यानुमितिः जायत इति न वैषम्यानुपपत्तिः।

एवं येन पुरुषेण यत्साधनं यद्व्याप्यतया यद्वृत्तितया यस्मिन् काले ज्ञायते तस्यैव पुरुषस्य तत्साधनं तत्रैव तस्मिन् काले तत्साध्यं प्रमापयतीति नियमश्चाश्रयणीयः। अत एव देवदत्तस्य धूमे व्याप्तिज्ञानात् यज्ञदत्तस्य वह्न्यनुमितिः, देवदत्तस्यैव घटाद्यनुमितिः, व्याप्यत्वज्ञानमात्रेण वह्न्यनुमितिः, कालान्तरे वह्न्यनुमितिश्च स्यादित्यादिचोद्यं निरस्तम्।

(1)तथाप्येवं व्याप्तिः केन गृह्यत इति चेत्, यथायथं प्रत्यक्षानुमानागमेभ्यः। तथाहि – महानसादौ धूमेन्द्रियसन्निकर्षात्

1 ननु व्याप्तिज्ञानं केन प्रमाणेन जायते। यथायथं प्रत्यक्षानुमानागमैरिति ब्रूमः – प्र.प.

तद्गतव्याप्तिर्गृह्यते। तस्य चेन्द्रियस्य वह्निज्ञानं सहकारी। धूम-निष्ठया वह्निनिरूपितसामानाधिकरण्यात्मिकाया व्याप्तेः ससम्ब-न्धिकपदार्थत्वेन वह्निज्ञानस्याप्यपेक्षणात्। अव्यभिचरितव्याप्य-साध्यसामानाधिकरण्यात्मिकाया व्याप्तेः व्यभिचारग्रहे सत्य -ग्रहणात्। व्यभिचारज्ञानाभावोऽपि सहकारी। स च भूयोदर्शनादि -जनितोपाध्यभावनिश्चयात्।

## उपाधिनिरूपणम्

उपाधिश्च यः साध्यव्यापकः साधनाव्यापकः स उच्यते। स त्रिविधः। शुद्धसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति। आद्यो यथा धूमाग्न्योः सम्बन्धे आर्द्रेन्धनवह्निसंयोगः। द्वितीयो यथा 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शा -श्रयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूत-रूपम्। तृतीयो यथा 'स श्यामो मित्रातनयत्वात्' इत्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकशाकपाकजत्वम्।

नन्वेवं 'पर्वतो वह्निमान्' इत्यत्र पक्षेतरत्वमुपाधिः स्यात्। तद्धि महानसादौ साध्यं वह्निं व्याप्नोति। न व्याप्नोति च धूमम्। पर्वतस्यैव पक्षत्वेन तत्र पक्षेतरत्वस्याभावात्। उच्यते – 'यद्य-ग्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इत्यनुकूलतर्केण पर्वतस्य वह्निमत्त्वे सिद्धे तत्र पक्षेतरत्वस्याभावेन लक्षणाभावः। पक्षाति-रिक्तस्थल एव व्याप्तिभङ्गो वक्तव्य इति नियमाश्रयणेऽपि

अनुकूलतर्केण साध्यनिश्चये सति सन्दिग्धसाध्यवत्त्वरूपलक्षणाभावेन तदितरत्वसम्भवः। यथोक्तम् –

**अनुकूलेन तर्केण सनाथे सति साधने।**
**साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः॥ इति।**

सोऽयमुपाधिः साध्यव्यापकत्वेन साधनाव्यापकत्वेन च ज्ञातः साधनत्वाभिमतस्य साध्यत्वाभिमताव्याप्यतां वा तद्व्यभिचारितां वा स्वव्यतिरेकेण साध्यभावं वा अनुमापयति। "वह्निः न धूमव्याप्यः, धूमव्यापकार्द्रेन्धनाव्याप्यत्वात्। यो यद्व्यापकाव्याप्यः स तदवाप्यः। यथा घटत्वव्यापकपृथिवीत्वाव्याप्यो द्रव्यत्वादिः घटत्वाव्याप्यः" इति वा। "वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनव्यभिचारित्वात्" इति वा। "विमतमयोगोलकादि न धूमवत्, आर्द्रेन्धनसंयोगरहितत्वात् ह्रदवत्" इति वा प्रयोगसम्भवात्। ततश्च तन्निश्चयः व्याप्तिग्रहप्रतिबन्धकः।

उपाध्यभावनिश्चयश्च योग्यानुपलब्ध्या। योग्यता च प्रतियोगि-तद्व्याप्येतरयावत्तदुपलम्भकसामग्रीसमवधानम्, प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोपलब्धिप्रतियोगिकत्वं वा। अयोग्योपलब्धेश्च शङ्कितुमशक्यत्वात्।

एवं च धूमे उक्तरीत्या प्रत्यक्षेणानुगतधूमत्वजात्यभावेऽपि सादृश्येन सम्बन्धेन एतत्सदृशो धूमः सर्वोऽपि वह्निव्याप्य इति सार्वत्रिकव्याप्तिग्रहः।

अनुमानगम्या पश्चात् प्रदर्शयिष्यते ।

आगमगम्या यथा 'यो यो ब्राह्मणः स सो न हन्तव्यः', 'या या गौः सा सा न पदा स्प्रष्टव्या' इत्यादिः 'ब्राह्मणो न हन्तव्यः' 'गौर्न पदा स्प्रष्टव्यः' इत्याद्यागमादवगम्यते ।

**अनुमानविभागः**

तच्चानुमानं द्विविधम् । केवलान्वयि, अन्वयव्यतिरेकि चेति । यस्य केवलमन्वयव्याप्तिरेव न व्यतिरेकव्याप्तिः तत् केवलान्वयि । यथा 'शब्दोभिधेयः प्रमेयत्वात्' इति । अत्र हि "यत्र प्रमेयत्वं तत्राभिधेयत्वम्" इत्यन्वयव्याप्तिरेवास्ति । व्याप्तिधर्मिणः प्रमेयत्वस्य तत्प्रतियोगिनः अभिधेयत्वस्य च सर्वत्र सत्त्वात् । न पुनः "यत्राभिधेयत्वाभावः तत्र प्रमेयत्वाभावः" इति व्यतिरेकव्याप्तिरस्ति । व्याप्तिधर्मिकप्रतियोगिनोरभिधेयत्वप्रमेयत्वयोरभावयोरसत्त्वात् । यस्यान्वयव्यतिरेकोभयव्याप्तिः तदन्वयव्यतिरेकि । यथा 'पर्वतो अग्निमान् धूमात्' इत्यत्रान्वयव्याप्तिधर्मिणः धूमस्य व्यतिरेकव्याप्तिधर्मिणः वह्न्यभावस्य च सत्वेनोभयविधव्याप्तिसम्भवात् ।

तस्य च (१)पक्षधर्मत्वं, (२) सपक्षे सत्वं, (३) विपक्षाद्व्यावृत्तत्वम्, (४) अबाधितविषयत्वम्, (५) असत्प्रतिपक्षत्वं चेति पञ्चाङ्गानि । केवलान्वयिनस्तु विपक्षाभावेन तद्व्यावृत्तिरहितत्वाच्चत्वार्यङ्गानि । इदं च तार्किकरीत्योक्तम् । न तु वस्तुतः ।

अनुकूलतर्केण साध्यनिश्चये सति सन्दिग्धसाध्यवत्त्वरूपलक्षणाभावेन तदितरत्वसम्भवः। यथोक्तम् –

**अनुकूलेन तर्केण सनाथे सति साधने।**
**साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः॥ इति।**

सोऽयमुपाधिः साध्यव्यापकत्वेन साधनाव्यापकत्वेन च ज्ञातः साधनत्वाभिमतस्य साध्यत्वाभिमताव्याप्यतां वा तद्व्यभिचारितां वा स्वव्यतिरेकेण साध्यभावं वा अनुमापयति। "वह्निः न धूमव्याप्यः, धूमव्यापकार्द्रेन्धनाव्याप्यत्वात्। यो यद्व्यापकाव्याप्यः स तदवाप्यः। यथा घटत्वव्यापकपृथिवीत्वाव्याप्यो द्रव्यत्वादिः घटत्वाव्याप्यः" इति वा। "वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनव्यभिचारित्वात्" इति वा। "विमतमयोगोलकादि न धूमवत्, आर्द्रेन्धनसंयोगरहितत्वात् ह्रदवत्" इति वा प्रयोगसम्भवात्। ततश्च तन्निश्चयः व्याप्तिग्रहप्रतिबन्धकः।

उपाध्यभावनिश्चयश्च योग्यानुपलब्ध्या। योग्यता च प्रतियोगि-तद्व्याप्येतरयावत्तदुपलम्भकसामग्रीसमवधानम्, प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोपलब्धिप्रतियोगिकत्वं वा। अयोग्योपलब्धेश्च शङ्कितुमशक्यत्वात्।

एवं च धूमे उक्तरीत्या प्रत्यक्षेणानुगतधूमत्वजात्यभावेऽपि सादृश्येन सम्बन्धेन एतत्सदृशो धूमः सर्वोऽपि वह्निव्याप्य इति सार्वत्रिकव्याप्तिग्रहः।

अनुमानगम्या पश्चात् प्रदर्शयिष्यते।

आगमगम्या यथा 'यो यो ब्राह्मणः स सो न हन्तव्यः', 'या या गौः सा सा न पदा स्प्रष्टव्या' इत्यादिः 'ब्राह्मणो न हन्तव्यः' 'गौर्न पदा स्प्रष्टव्यः' इत्याद्यागमादवगम्यते।

## अनुमानविभागः

तच्चानुमानं द्विविधम्। केवलान्वयि, अन्वयव्यतिरेकि चेति। यस्य केवलमन्वयव्याप्तिरेव न व्यतिरेकव्याप्तिः तत् केवलान्वयि। यथा 'शब्दोभिधेयः प्रमेयत्वात्' इति। अत्र हि "यत्र प्रमेयत्वं तत्राभिधेयत्वम्" इत्यन्वयव्याप्तिरेवास्ति। व्याप्तिधर्मिणः प्रमेयत्वस्य तत्प्रतियोगिनः अभिधेयत्वस्य च सर्वत्र सत्त्वात्। न पुनः "यत्राभिधेयत्वाभावः तत्र प्रमेयत्वाभावः" इति व्यतिरेकव्याप्तिरस्ति। व्याप्तिधर्मिकप्रतियोगिनोरभिधेयत्वप्रमेयत्वयोरभावयोरसत्त्वात्। यस्यान्वयव्यतिरेकोभयव्याप्तिः तदन्वयव्यतिरेकि। यथा 'पर्वतो अग्निमान् धूमात्' इत्यत्रान्वयव्याप्तिधर्मिणः धूमस्य व्यतिरेकव्याप्तिधर्मिणः वह्न्यभावस्य च सत्वेनोभयविधव्याप्तिसम्भवात्।

तस्य च (१)पक्षधर्मत्वं, (२) सपक्षे सत्वं, (३) विपक्षाद्व्यावृत्तत्वम्, (४) अबाधितविषयत्वम्, (५) असत्प्रतिपक्षत्वं चेति पञ्चाङ्गानि। केवलान्वयिनस्तु विपक्षाभावेन तद्व्यावृत्तिरहितत्वाच्चत्वार्यङ्गानि। इदं च तार्किकरीत्योक्तम्। न तु वस्तुतः।

घटादौ प्रमिता तावत् प्रागभावेन युक्तता ।
आरोप्य बुद्धिपूर्वं सा गगनादौ निषिध्यते ॥

इत्युक्तरीत्या विपक्षवृत्तित्वस्याभावेऽपि प्रसिद्धस्य बुद्धिपूर्वमारोपितस्य निषेधसम्भवात् ।

ननु केवलव्यतिरेकि चेति तृतीयमनुमानं वक्तव्यम् । तत्कथं द्विविधमेवानुमानम् इत्युक्तम् । उच्यते - अन्वयव्याप्तिरहितं केवलव्यतिरेकीत्युच्यते । न चेदं प्रमाणपदमधिरोहति । "अनुमानस्य द्वयं सामर्थ्यम्, व्याप्तिः समुचितदेशवृत्तिता चेति" इत्युक्तम् । साधनत्वेनाभिमते यदि व्याप्तिर्न स्यात् कथं तदनुमानं स्यात् । न च साधने व्याप्त्यभावेऽपि साध्याभावे व्याप्तिरस्तीति वाच्यम् । साध्याभावस्य साधनत्वेन निर्देशाभावात् । साधन एव हि व्याप्तिरपेक्षिता । न हि भावेन भावसाधने, अभावे व्याप्तिरपेक्षिता ।

किञ्च, अन्वयव्याप्तिशून्यमनुमानं न सम्भावयितुं शक्यम् । ननु 'जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्' इत्याद्यनुमानं सम्भाव्यत इति चेन्न । तस्य अन्वयव्याप्तिशून्यताऽसम्मतेः । न च तत्र दृष्टान्ताभावेनान्वयव्याप्तिर्नास्तीति वाच्यम् । व्याप्तेर्धर्मिसत्तासापेक्षत्वेऽपि दृष्टान्तसत्तासापेक्षत्वाभावात् । न च तदभावे कथं व्याप्तिर्गृह्यत इति वाच्यम् । तावताऽपि व्याप्तेरसत्वासिद्धेः । अन्यथा 'देवदत्तशरीरं सात्मकं प्राणादिमत्त्वात् यज्ञदत्तशरीरवत्'

इति प्रयोगो न स्यात्। दृष्टान्ताभावे प्रत्यक्षेण व्याप्तेर्दर्शयितुमशक्यत्वेऽपि, अनुमानगम्याया व्याप्तेः सत्त्वावश्यम्भावाच्च। "विमतं प्राणादिमत्त्वं सात्मकत्वव्याप्यं तदभावव्यापकीभूताभावप्रतियोगित्वात्, यो यदभावव्यापकीभूताभावप्रतियोगी स तद्व्याप्यः, यथा वह्न्यभावव्यापकीभूताभावप्रतियोगी धूमो वह्निव्याप्यः" इति प्रयोगसम्भवात्।

एवमनुमानग्राह्यान्वयव्याप्तिसत्वेऽपि प्रत्यक्षग्राह्यव्याप्तिराहित्यमात्रेण केवलव्यतिरेकीति व्यवहारोपपत्तौ तस्य न विधान्तरा सम्भवतीत्यन्वयव्यतिरेकिण्यन्तर्भावसम्भवः। अत एव [1]क्वचिद्व्यतिरेकव्याप्तिप्रदर्शनं व्यभिचाराभावप्रदर्शनमुखेनान्वयव्याप्तिनिश्चय उपयुज्यते।

पुनरनुमानं द्विविधम्। स्वार्थं परार्थं चेति। यत् परोपदेशमनपेक्ष्य जायमानं धूमादिज्ञानं तत् स्वार्थानुमानम्। यत् तु परोपदेशमपेक्ष्य धूमादिज्ञानमुत्पद्यते तत् परार्थानुमानम्। [2]तज्जनकत्वात् परोपदेशात्मकवाक्यमपि परार्थानुमानत्वेनोपचर्यते। तद्वाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यपञ्चावयवोपेतमेव इत्यन्ये । प्रतिज्ञादयो वा उदाहरणादयो वा त्रय एवेति केचित्।

---

1 तथानुमानाङ्गान्वयव्याप्तिसाधकतया न तु साक्षादङ्गतयेति द्रष्टव्यम्–तर्कताण्डवे

2 "इतःपरं सोऽयं शब्दः द्विविधः" इति पर्यन्तं खपाठ एव।

उदाहरणोपनयौ द्वावेव इत्यपरे। तदेतानि मतानि प्रमाण-शून्यानि । किञ्च अनेनावयवनियम एव उक्तः। यावता वाक्य-सन्दर्भेण पर्वते धूमप्रतिपत्त्या वह्नि प्रतिपत्तिर्भवति यावता अवयवेन विना न भवति तावदेव वक्तव्यम्। न त्वधिकं नापि न्यूनम्। अत एव 'पर्वतोऽग्निमान् वा न वा' इति वादिविप्रतिपत्त्या वादिवाक्यादेव प्रतिज्ञांशसिद्धौ हेतुवाक्यमात्रस्य उदाहरणवाक्य-मात्रस्य वा प्रयोगेऽप्यनुमितेरानुभाविकत्वेन नियमो अयुक्त - इत्याचार्याः ॥

तच्चानुमानं द्विविधम्। साधनानुमानम् दूषणानुमानं चेति। तत्राद्यं साध्यप्रमितिसाधनम्। यथा प्रसिद्धानुमानमेव। [१]दुष्ट-प्रमितिसाधनं द्वितीयमपि द्विविधम्। साक्षात्परम्परया चेति। तत्राद्यं यथा। 'वह्निरनुष्णः पदार्थत्वात्' इत्युक्ते परो वक्ति पदार्थत्वादिति हेतुरनुष्णत्वसाधको न प्रत्यक्षविरुद्धार्थसाधनत्वा-दिति। अत्र हि अनुष्णत्वासाधकत्वलक्षणं पदार्थत्वहेतुनिष्ठं दुष्टत्वं साक्षादेव प्रमीयते। द्वितीयं तर्क उच्यते[२]। स यथा 'धूमः पर्वते वह्निं विनापि भवितुमर्हति धर्मत्वात् पाषाणवत्' इत्यत्र यदि पर्वते अग्निर्न स्यात् तर्हि धूमो न स्यात् यथा महाह्रदे। अस्त्यसौ धूमः पर्वते तस्मात् पर्वतो वह्निमान् इति।

1 दूषणानुमानमपि द्वेधा। दुष्टप्रमितिसाधनं तर्कश्चेति – प्रमाणपद्धतौ

2 कस्यचिद्धर्मस्याङ्गीकारेऽर्थान्तरस्यापादनं तर्कः – प्रमाणपद्धतौ

अत्र हि धूमे वह्न्यभावव्यापकीभूताभावप्रतियोगित्वप्रतिपादनमुखेन धर्मत्वहेतोः वह्न्यविनाभावासाधकत्वलक्षणदुष्टत्वम् अनुमीयते। साक्षात् तस्य पञ्चाङ्गानि। आपाद्यापादकयोः व्याप्तिः, प्रतितर्काप्रतिघातः, परस्यानिष्टत्वमननुकूलत्वम्, विपर्यये पर्यवसानं चेति। यथोक्तम् -

व्याप्तिस्तर्काप्रतिहतिः अवसानं विपर्यये।
अनिष्टाननुकूलत्वमिति तर्काङ्गपञ्चकम् – इति।

नन्वयं तर्कः अनुमानं न स्यात्। यावता अस्य प्रामाण्यमेव दुर्घटम्। अनुमानत्वप्रयोजकानि च न सन्ति। अनेन हि तर्केण धूमो न स्यात् इति आपादनात् धूमाभावज्ञानमुत्पद्यते। तथाच अनया वाचोभङ्ग्या वह्न्यभावेन धूमाभावः साधनीयः। न तत्र वह्न्यभावस्य हेतुत्वं वक्तुं शक्यते। वह्नेः सन्दिग्धत्वात्। न वाऽबाधितविषयत्वं प्रत्यक्षेण धूमस्य निश्चितत्वात्॥

उच्यते -

स्यादिदं साधनेऽमानं न चेदं दूषणं यतः।
तत्रासिद्ध्यादयो दोषा नैवालङ्काररूपतः[१]।

न हि वयं एवं साधयामः। किन्त्वापादयामः। तत्र च

1 स्यादिदं सर्वं निराकरणं यदीदं साधनं मानम्। न चेदं तथा। यतो दूषणानुमानमिदमतो न दोषः – इत्याशयः।

असिद्ध्यादयो न दोषाः। अन्यैः प्रथितस्य प्रमाणानुग्राहकत्वमेव त्वदङ्गीकृतं व्याहन्येत। न हि स्वयमप्रमाणं प्रमाणानुग्राहकम्। धर्मब्रह्ममीमांसयोः तर्कघटितयोरप्रामाण्यप्रसङ्गाच्च।

अनुकूलेन तर्केण सनाथे सति साधने।
अङ्गपञ्चकसम्पन्नः तत्वज्ञानाय कल्पते॥

इति स्वोक्तिविरोधाच्च। पर्वतो धूमाभाववत्तया अङ्गीकार्यः, त्वया वह्न्यभाववत्तयाङ्गीकृतत्वात् सम्प्रतिपन्नवदिति प्रयोगेऽसिद्ध्याद्यभावेन अङ्गसाकल्यसम्भवाच्च। किञ्च केवलव्यतिरेकिणि केवालन्वयिनि च क्लृप्तपञ्चरूपाभावेऽपि प्रमाणत्ववत् इहापि प्रमाणत्वोपपत्तिः।

सोऽयं तर्कः स्वयं प्रमाणरूपोऽपि अनुग्राहकरूपः। यथा स्वयं प्रमाणरूपोऽपि शब्दः प्रत्यक्षानुमानयोः, यथा च स्वयं प्रत्यक्षमपि पटुप्रत्यक्षमपटोः, स्वयं तैजसोऽपि आलोकः तैजसचक्षुषोरनुग्राहकः। तथा प्रत्यक्षानुमानागमानाम् अनुग्राहकोऽस्तु। परन्तु केचन दोषाः सन्ति। व्याप्तिविरहित्वं, प्रतिकूलतर्कपराहतिः, विपर्ययपर्यवसानाभावादयः। तेऽनुमान इव व्यावर्तनीयाः। न हि तदाभासस्य दोषदर्शनेन तस्यापि प्रमाणत्वं विहन्यते। तथा सति प्रमाणकथोच्छेदप्रसङ्गः। तस्मात् तर्कः प्रमाणमेव।

## हेत्वाभासाः

अथ हेत्वाभासा निरूप्यन्ते। अनुमितिप्रतिबन्धकयथार्थ-ज्ञानविषयत्वं हेत्वाभासत्वम्। हेत्वाभासाः चतुर्विधाः। विरोधा-सङ्गतिन्यूनाधिक्यभेदात्। तत्र योग्यताभावो विरोधः यथा 'अग्निना सिञ्चति' इत्यत्र सेककरणताप्रयोजकद्रवद्रव्यत्वाभावेन अग्नौ सेककरणयोग्यताभावः। आकाङ्क्षाभावोऽसङ्गतिः यथा 'पर्वतो न वह्निमान्' इति। अवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनम् यथा 'पर्वतोऽग्निमान्' इत्येव वचनम्। इदमेव सान्निध्या-भावविशेष इत्यपि गीयते। आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनमाधिक्यम्। यथा 'यो धूमवान् सोऽग्निमान्, यथा महानसः यथा चत्वरः' इत्यादीनि।

नन्विह अनुमानदोषाः समुपक्रान्ताः। सूच्यन्ते वाक्यदोषाः। तत्कथं नासङ्गतिः। सत्यम्। परार्थानुमानस्य वाक्यरूपस्यापि इह प्रस्तुतत्वात् नासङ्गतिः। तथापि विरोधासङ्गत्योरर्थदोषत्वं कथं सङ्गच्छत इति चेन्न। स्वार्थानुमानस्यापि प्रस्तुतत्वात्। तथाच साक्षादर्थदोषयोः विरोधासङ्गत्योः तत्र प्रतिपादकता-सम्बन्धेन वाक्यदोषत्वम्। साक्षाद्वाक्यनिष्ठयोः न्यूनाधिक्ययोः तत्प्रतिपाद्यतासम्बन्धेन अर्थनिष्ठत्वं च प्रत्येतव्यम्।

तत्र विरोधस्त्रिविधः। प्रतिज्ञाविरोधो हेतुविरोधो दृष्टान्त-विरोधश्चेति। तत्र प्रतिज्ञावाक्ययोग्यताभावः प्रतिज्ञाविरोधः।

पक्षवचनं प्रतिज्ञा। पक्षश्च सन्दिग्धसाध्यधर्मधर्मी। प्रतिज्ञाविरोधो द्विविधः। प्रमाणविरोधः स्ववचनविरोधश्चेति। तत्राद्योऽपि द्विविधः। प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति। तत्राद्योऽपि प्रबलप्रत्यक्षानुमानागमविरोधभेदात्त्रिविधः। प्रबलप्रत्यक्षविरोधो यथा 'अग्निरनुष्णः' इति प्रतिज्ञायाः नायमनुष्णः इति त्वाचप्रत्यक्षेण । प्रबलानुमानेन विरोधो यथा 'नेदमनुष्णं तेजस्त्वादि'-त्यनेन प्रत्यक्षसहकृतेन तद्विरोधः। प्रबलागमविरोधो यथा - प्रत्यक्षानुगृहीतेन नायमनुष्णवानित्याप्तवाक्येन।

समबलप्रत्यक्षानुमानागमविरोधभेदात् समबलप्रमाणविरोधश्च त्रिविधः। तत्राऽद्यो यथा 'शब्दोऽनित्यः' इति प्रतिज्ञायाः 'सोऽयं गकारः' इत्यादि प्रत्यभिज्ञाप्रत्यक्षेण। द्वितीयोऽपि तेनैव हेतुना हेत्वन्तरेण चेति द्विविधः। तत्राऽद्यो यथा, 'शब्दः नित्यः कृतकत्वात्' इति प्रयोगे 'अनित्यः कृतकत्वात्' इति तेनैव हेतुना । द्वितीयो यथा, तत्रैव शब्दत्वादिति हेत्वन्तरेण । समबलागमविरोधो यथा, 'यागः व्रीहिमात्रजन्यः व्रीहिभिर्यजेत इति विहितत्वात्' इत्यत्र 'यवैर्यजेत' इत्यागमेन। अत्र यद्यपि विरोधिनां प्रत्यक्षानुमानागमानां नानुमानसमबलत्वम्। प्रत्यक्षस्य उपजीव्यत्वादिना प्राबल्यात्। एवं कृतकत्वानुमानस्य शब्दनित्यत्वविरोधित्वेन हीनबलत्वात्। एवमागमविरोध्यनुमानस्यापि हीनबलत्वात्। 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु

स्मृतम्' इत्यादिना आगमस्यैव प्रबलत्वाच्च। तथापि उपष्टम्भ-कान्तरसहायादिना समबलत्वाभिमानमात्रं न तु वस्तुतः सम-बलत्वम्। अन्यथा उभयोरपि प्रामाण्यप्रसङ्गात्। यद्यपि हीन-बलप्रमाणविरोधोऽप्यस्ति। तथापि तस्य बाधप्रतिरोधान्यतर-हेतुत्वाभावेन अकिञ्चित्करत्वात् नेह परिगणनम्।

स्ववचनविरोधोऽपि द्विविधः - अपसिद्धान्तो जातिश्चेति। तत्र सिद्धान्तविरोधो अपसिद्धान्तः[१]। स यथा 'तार्किकप्रयोगे शब्दो द्रव्यं न इन्द्रियग्राह्यत्वात्' इत्यत्र प्रतिज्ञाभागस्य। ननु कथमयं स्ववचनविरोधः, उच्यते - पूर्वाचार्यवचनं स्वेनाप्यङ्गी-कृतमिति स्ववचनमेव। स्ववचन एव व्याहतिर्जातिः। यथा 'मे माता वन्ध्या' इति। तदेवं व्याख्यातः प्रतिज्ञाविरोधः।

हेतुविरोधोऽपि द्विविधः। असिद्धिः अव्याप्तिश्चेति। समुचिते स्थळे लिङ्गस्य अप्रमितिः असिद्धिः। यथा 'शब्दो नित्यः चाक्षुषत्वात्' इत्यत्र। अव्याप्तिस्त्रिविधा। [२]साध्याभाववद्वृत्तिः, साध्याभाववन्मात्रवृत्तिः, साध्यतदभावोभयवद्व्यावृत्तिश्चेति। तत्रा-

---

1 पूर्वाचार्यैर्यत् प्रामाणिकतयाभ्युपगतं तद्विरुद्धाङ्गीकारोऽपसिद्धान्तः। पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वात् – प्रमाणपद्धतौ।

2 अव्याप्तिस्त्रिविधा। लिङ्गस्य साध्येन तदभावेन च सम्बन्धः, साध्य-सम्बन्धाभावे सति तदभावेनैव सम्बन्धः, उभयसम्बन्धाभावश्चेति – प्रमाण-पद्धतौ।

द्या यथा 'पर्वतो वह्निमान् प्रमेयत्वात्' इति। अत्र हि प्रमेयत्वं साध्याभाववति ह्रदे अस्ति। द्वितीया यथा 'शब्दो नित्यः चाक्षुषत्वात्' इत्यादि। चाक्षुषत्वं नित्यत्वाभाववति घटादौ वर्तते। न पुनः नित्यत्ववति क्वचिदपि(१)। गगनादौ तदभावात्। तृतीया यथा - 'पृथिवी नित्या गन्धवत्त्वात्' इति। अत्र गन्धवत्त्वं नित्याद्गगनादेरनित्याज्जलादेश्च व्यावृत्तम्। तस्य पृथिवीमात्र-निष्ठत्वात्।

दृष्टान्तविरोधो द्विविधः। साध्यवैकल्यं साधनवैकल्यं चेति। तत्राद्यं 'यथा पर्वतः पर्वतीयवह्निमान् धूमात् यथा महानसः' इति। अत्र नहि पर्वतीयवह्निः महानसेऽस्ति। द्वितीयं यथा - 'पर्वतोऽयम् अग्निमान् पर्वतीयधूमात् यथा महानसः' इति। अत्र नहि पर्वतीयो धूमो महानसेऽस्ति। तदेवं व्याख्यातो विरोधः।

असङ्गतिस्त्रिविधा – प्रतिज्ञाऽसङ्गतिः हेत्वसङ्गतिः दृष्टान्ता-सङ्गतिश्चेति। तत्राद्या यथा– 'पर्वतो द्रव्यवह्निमान् धूमात्' इति। अत्र प्रतिज्ञाभागे वह्नेः द्रव्यत्वस्य अनाकाङ्क्षितत्वादसङ्गतिरेव। हेत्वसङ्गतिर्यथा – 'अग्निमान् नीलधूमवत्त्वात्' इति, अत्र नीलत्व-स्य धूमे अनाकाङ्क्षितत्वादसङ्गतिरेव। दृष्टान्तासङ्गतिर्यथा - 'अग्निमान् धूमात् यथा द्रव्यं महानसे' इति। अत्र हि दृष्टान्ते

1 यद्यपि नित्ये सामान्ये चाक्षुषत्वं वर्तते। तथापि सिद्धान्तरीत्या सामान्या-परनामकजातेर्नित्यत्वानुपरागादेवमुक्तिः।

महानसे द्रव्यस्यानाकाङ्क्षितत्वात् असङ्गतिः। 'दशदाडिमानि षडपूपाभावात्; महान्ति कुण्डवत्' इत्यादौ त्रिविधासङ्गतिः द्रष्टव्या।

न्यूनत्वं त्रिविधम्। प्रतिज्ञाहेतुदृष्टान्तभेदात्। 'शब्दः पृथिव्या-द्यष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणवत्त्वात्' इति वक्तव्ये 'शब्दः द्रव्याश्रितः' इत्येवप्रयोगे प्रतिज्ञान्यूनत्वम्। 'पर्वतः वह्निमान् धूमात्' इति वक्तव्ये 'पर्वतः वह्निमान् इत्येव प्रयोगे हेतुन्यूनत्वम्। 'देवदत्तप्रवृत्तिः ज्ञानपूर्विका प्रवृत्तित्वात् मदीयप्रवृत्तिवत्' इति वक्तव्ये 'प्रवृत्तिवत्' इत्येव प्रयोगे दृष्टान्तन्यूनत्वम्।

आधिक्यं त्रिविधम् - प्रतिज्ञाहेतुदृष्टान्तभेदात्। तत्राद्यं 'पर्वतो अग्निमान् पर्वतो अग्निमान्' इति प्रयोगे। द्वितीयं धूमव-त्त्वात् धूमवत्त्वात् इति प्रयोगे । तृतीयं महानसवत् महानसवत् इति प्रयोगे।

आश्रयासिद्धिव्यधिकरणासिद्ध्यप्रसिद्धविशेषणत्वसिद्धसाधन-त्वार्थान्तरत्वादीनां तार्किकपरिगणितानां मध्ये केषाञ्चित् आश्रया-सिद्धिव्यधिकरणासिद्ध्यादीनां व्याप्तौ सत्यां दोषत्वमेव नास्ति[१]। केषाञ्चित् सिद्धसाधनत्वादीनामसङ्गत्यादावन्तर्भावः इति सङ्क्षेपः।

1 आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम्।
केषाञ्चिन्न च ते दोषाः व्याप्तौ सत्यां कथञ्चन॥ अनुव्याख्याने

# आगमः

अत्र तृतीयं शब्दाख्यमनुप्रमाणमुच्यते। [१]निर्दोषवाक्यं शब्दः । वाक्यं[२] च पदानां समूहः। पदानि[३] वर्णानां समूहः। ननु वर्णविवेकोक्तरीत्या वर्णानां सर्वगतत्वात् नित्यत्वाच्च मेळनासम्भवात् कथं वर्णानां समूहः पदानाम्। उच्यते – वर्णव्यञ्जकानां ध्वनीनां सर्वगतत्वाद्यभावेन तद्वारा वर्णानामपि मेळनसम्भवात्। न च ध्वनीनामाशुतरविनाशित्वात् मेळनासम्भव इति वाच्यम्। वर्णानां प्रतिनियतव्यङ्ग्यत्वस्य साधितत्वेन, [४]स्वसवर्णोच्चारणजन्यध्वनिविशेषेण वर्णव्यञ्जने सति तदनुभवजन्यसंस्कारः तदुत्तरवर्णानुभवकालेऽप्यस्ति। एवं तदनुभवजन्यसंस्कारः तदुत्तरवर्णानुभवकालेऽप्यस्ति इत्यादिप्रकारेण च तत्तद्वर्णानां समुदायसम्भवः। एतेन वर्णानां स्वतः क्रमशून्यानां आनुपूर्वीविशेषघटितं पदत्वादिकमनुपपन्नमिति निरस्तम्। उच्चारणादीनां क्रमभावित्वेन तद्वारा वर्णानामपि क्रमोपपत्तेः।

---

1 निर्दोषः शब्दः आगमः – प्र.प.

2 आकाङ्क्षासन्निधियोग्यवतां पदानां समूहो वाक्यम् – प्र.प.

3 विभक्त्यन्ता वर्णाः पदम् – प्र.प.

4 तत्तद्वर्णव्यञ्जकध्वनीनां तत्तद्वर्णानां चास्ति किञ्चित्सावर्ण्यम्। उच्चारणजन्य ध्वनिविशेषेण वर्णविशेषः अभिव्यज्यते। तद्वर्णानुभवश्च संस्कारं जनयति। एवं तदुत्तरवर्णानुभवोऽपि संस्कारं जनयति। एतैर्वर्णसंस्कारैः सहितमन्तिमवर्णसन्निकृष्टं श्रोत्रमनेकेषु वर्णेषु एकां पदबुद्धिं जनयतीति प्रमाणपद्धत्युक्तमत्र विव्रियते।

ननु शब्दो न प्रमाणम्। तथाहि – कश्चित् शब्दो ज्ञानमेव न जनयति। यथा 'अयं घटोऽघटः' इति। कश्चिन्निष्प्रयोजनमेव बोधयति। यथा 'अग्निना सिञ्चति' 'काकस्य अष्टौ दन्ताः' इति। कश्चित् अनभिमतप्रयोजनम्, यथा सन्न्यासिनं प्रति 'प्रजा-वान् भव' इति। कश्चित् कृत्यसाध्यम्, यथा 'तक्षकचूडामणिः सङ्ग्राह्यः' इति। कश्चित् लघूपाये सति गुरूपायम्, यथा भवन्ति नदीतीरे तृषितं प्रत्युक्तः 'कूपं कुरु' इति। कश्चिदर्थं वितथं यथा 'चैत्यं वन्देत् स्वर्गकामः' 'अ(?)हिंसा परमो धर्मः' इत्यादिः। तत्कथं शब्दः प्रमाणं स्यात्। उच्यते – अत एव वक्तृदोष-व्यावृत्त्यर्थं 'निर्दोषवाक्यं शब्दः' इति लक्षणमुक्तम्। तथा च परिगणिताः शब्दाः तत् किञ्चिद्दोषसंसृष्टाः एव। तथा हि शब्द-स्य हि दोषाः अबोधकत्व-विपरीतबोधकत्व-ज्ञातज्ञापकत्वानभिमत-प्रयोजनत्वाशक्यार्थबोधकत्वादयः भ्रमप्रमादविप्रलिप्साकरणा-पाटवप्रसङ्गादिप्रयुक्ताः।

ननु तथापि शब्दः न प्रमाणम्। किन्तु विमतानि पदानि वृत्त्या स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यतादिमत्पद-कदम्बकत्वात् व्यतिरेकेण घटादिवत्। 'विमतो वक्ता स्मारित-पदार्थसंसर्गवान् आकाङ्क्षायोग्यतादिमत्पदकदम्बकप्रयोक्तृत्वात्' इत्याद्यनुमानविधयैवेति चेन्न। शुकोदीरितवाक्ये व्यभिचारात्। वक्तृज्ञानानुमानसामग्रीविरहदशायामपि 'घटमानय' इत्यादि-

वाक्यात् स्वातन्त्र्येणैव संसर्गप्रमितेः जायमानत्वात्, शब्दात् 'अमु- मर्थं प्रत्येमि' इत्यनुव्यवसायविरोधाच्च ।

ननु विमतः शब्दः न प्रमितिकारणं सम्बन्धशून्यत्वात् । न हि करणं सम्बन्धशून्यं भवति। अतिप्रसङ्गात्। उच्यते - अर्थेन शब्दस्य प्रतिपादकत्वरूपसम्बन्धोऽस्त्येव। यथा अनुमानस्य व्यापकेन व्याप्तिरूपसम्बन्धः। एतेन शब्दार्थयोः संयोगादिरूप-प्रसिद्धसम्बन्धाभावात् करणत्वानुपपत्तिरिति निरस्तम्। अनुमाने-ऽपि अनुमेयेन प्रसिद्धसम्बन्धाभावेन करणत्वाभावापत्तेः।

## वृत्तिनिरूपणम्

अत एव अर्थप्रतिपादकत्वमेव वृत्तिरित्युच्यते। तेन घट-पदस्य घटबोधकताऽस्ति। घटप्रतिपादकत्वरूपवृत्तिसद्भावात्। ननु शब्दस्य ज्ञातकरणत्वेन तज्ज्ञानविधुरस्य अर्थबोधाभावेऽपि शब्दस्वरूपमात्रज्ञानवतः घटमानय इत्यादिवाक्यश्रवणानन्तर-मर्थबोधाभावः, कुतः? वृत्तिज्ञानाभावात् इति ब्रूमः। शब्दवत् तद्वृत्तेरपि ज्ञाताया एव उपयोगाभ्युपगमात्।

### वृत्तिग्रहनिरूपणम्

ननु कथं सा प्रत्येतव्या। शब्दनिष्ठायाः प्रतिपादकतारूपायाः वृत्तेः अतीन्द्रियत्वेन प्रत्यक्षायोग्यत्वादिति चेत्, तथाप्यनुमानेन तज्ज्ञानं भविष्यति। तथाहि - कश्चित् प्रयोजकवृद्धः प्रयोज्यवृद्धं

प्रति ब्रवीति। 'देवदत्त घटमानय, गामानय' इत्यादि । ततः प्रयोज्यवृद्धः दण्डं गृहीत्वा सास्नादिमच्छुक्लव्यक्तिं घटं च आनयति। ततः पार्श्वस्थो व्युत्पित्सुः प्रयोज्यवृद्धगताम् आनयन-क्रियां दृष्ट्वा इयं क्रिया प्रयत्नपूर्विका क्रियात्वात् मदीयक्रियावत् इत्यनुमाय तत्प्रयत्नः ज्ञानपूर्वकः प्रयत्नत्वात् मदीयप्रयत्नवदिति तदीयज्ञानमनुमाय, तत्करणान्वेषणे अन्यमलभमानः उपस्थित-त्वाद् योग्यत्वाच्च प्रयोजकवृद्धोच्चारितं 'घटमानय' इत्यादि-वाक्यमेव प्रयोज्यवृद्धस्य घटकर्मकानयनक्रियाकसंसर्गादिज्ञानस्य कारणं कल्पयति। (तानि तानि निमित्तानि अन्यस्य अन्य-कारणत्वायोगेन) घटकर्मत्वादिरूपार्थानां घटादिपदानां च सम्मुग्धाकारेण कञ्चन सम्बन्धं सामान्यतो अवधारयते॥

ततः केनार्थेन कस्य शब्दस्य सम्बन्धः? इति इमं विशेषं जिघृक्षन् पुनस्तयोः व्यवहारमपेक्षते। ततः प्रयोजकवृद्धः प्रयोज्यवृद्धं प्राह 'घटं भिन्धि' 'घटेन जलमाहर' इति। ततः प्रयोज्यवृद्धः घटस्य भेदनं करोति, जलमानयति घटेन। व्युत्पित्सुः भिन्धिपदावापेन आनयनपदोद्धारेण, एवं द्वितीयोद्धारेण च तृतीयावापेन, घटपदोद्धारेण जलपदावापेन, भिन्दिपदस्य भेदने, आनयनपदस्य आनयने, घटपदस्य कम्बुग्रीवादि-मद्व्यक्तिविशेषे, द्वितीयायाश्च कर्मत्वे, तृतीयायाश्च करणत्वे, जलपदस्य द्रवद्रव्यविशेषे च वृत्तिमनुमिनोति। तदेवं वृद्ध-

व्यवहारेण घटादिपदानां शक्तिं गृह्णानः सामान्यतो योग्येतर-पदार्थान्विते कम्बुग्रीवादिमद्व्यक्तिविशेष एव वृत्तिं गृह्णाति। न घटत्वमात्रे। अत एव घटमित्येवोक्ते क्रियापदोच्चारणात् प्राक् आनयनं भेदनं वा कार्यमिति सामान्यत इतरपदार्थप्रतीतिसद्भावेऽपि अन्वयप्रतियोगीतरपदार्थं विशेषतो जिज्ञासते। सामान्याकारेणा-न्वयप्रतियोग्यवगते एव विशेषजिज्ञासा भवति। नान्यथा। तथाच विशेषजिज्ञासाप्रयोजक-सामान्यज्ञानसिद्ध्यर्थम् इतरान्विते वृत्तिर-वश्यम् अभ्युपेतव्या। न चैवं घटपदश्रवणेनैव आनयनान्वित-घटोपस्थितौ आनयनस्याप्युपस्थितत्वात् आनयनपदं व्यर्थम्। आनयनघटपदयोः पर्यायता च स्यादिति वाच्यम्। घटपदात् घटधर्मिकान्वयतियोगीतरपदार्थानां सामान्यतो बोधेऽपि घटवद्वि-शेषप्रकारेणावबोधाभावात्।

अत्र कश्चित् – आनन्त्यव्यभिचाराभ्यां व्यक्तौ वृत्तिः दुर्ग्रहेति जातावेव घटादिपदानां वृत्तिः। व्यक्तिलाभस्तु आक्षेपात् इत्या-हुः। तन्न। जातिशून्यानां गोत्वसमवायाभावस्वरूपादीनामपि पदैः शाब्दबोधाभावप्रसङ्गात्। न हि गोत्वसमवायाभावस्वरूपेषु जातिरस्ति। अपूर्वव्यक्तिलाभस्तु सादृश्यलक्षणप्रत्यासत्त्या वृत्ति-ग्रहकाले सकलव्यक्त्युपस्थितौ तत्रापि वृद्धप्रयोगादेव युक्तः।

यदुक्तं प्राभाकरेण – उक्तरीत्या प्रथमतः प्रयोज्यप्रयोजकवृद्ध-व्यवहारदर्शनेन आनयनादिकार्यान्विते घटादौ वृत्तिग्रहात् तदनु-

सारेण सर्वत्रापि कार्यान्वित एव पदार्थे वृत्तिग्रहः। न सिद्धेऽर्थे। लिङादिपदसमभिव्याहाररहितेषु कार्यवाचिपदाभावात् कार्यान्वित-स्वार्थबोधकत्वासम्भवात् मूकतैवेति। तदपि न। लाघवानुसन्धानेन प्रथमप्रतीतावपि कार्यान्विते वृत्तिं विहायेतरान्वितस्वार्थे वृत्तिग्रहसम्भवात्। न हि प्रथमप्रतीतिर्निर्बाध्येति राजाज्ञा अस्ति। प्रथमायाः अपि प्रतीतेर्बाधदर्शनाच्च। सामान्यतो योग्येतरान्वित-स्वार्थ एव वृत्तिग्रहे कार्यान्वितशक्तेः प्रमितत्वानुपपत्तेः लिङ्लोट्तव्यप्रत्ययसमभिव्याहाररहितानां 'पुत्रस्ते जातः' 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिबहूनां वाक्यानां बोधकत्वदर्शनेन मूकत्वकल्पनमन्याय्यम्। नन्वेवं व्यवहारात् वृत्तिग्रहाङ्गीकारे सोऽपि व्यवहारः वृत्तिग्रहमूल एवेत्यनवस्था। प्रळये व्यवहर्तॄणाम् अभावेन व्यवहारविच्छेदे सिद्धे पुनः कल्पादौ व्यवहारानुपपत्तिश्च। मैवम्। ईश्वरपक्षत्वोपपत्तेः[1]। ईश्वरो हि मन्वादीन् बोधयति। ते च अन्यानि इत्येवं परम्परया सम्प्रति वयमित्युक्तौ बाधकाभावात्।

व्याकरणाच्च क्वचिद्वृत्तिग्रहः। तदधीते तद्वेद, तस्य समूहः, तस्यैतदित्यधिकृत्य तत्तदर्थेषु तत्तत्प्रत्ययविधानात्। अत एवेति "तिस्र एव साह्नस्य उपसदः द्वादशाहीनस्य"[2] इत्यत्राहीनशब्दस्य मध्ये शास्त्रपर्यालोचनेन द्विरात्राद्यगृहणेषु[3] वृत्तिग्रहः। न पुनः

---

1 ईश्वरस्योपदेशकत्वोपपत्तेः - इत्याशय इति भाति।

2 अहीनाङ्गताधिकरणे

3 द्विरात्रत्रिरात्रादिरग्रहण

'ज्योतिष्टोमेन विश्वेदेवाः समयजन्त' इत्यत्र विश्वेदेवत्वेति श्रुत्या विश्वेदेवकर्तृकृता प्रतीतेः, व्याकरणेन ऋतुदेवताकत्वं प्रतीयत इति कथं व्याकरणस्य वृत्तिग्रहे उपयोग इति चेत्। यत्र प्रबल-विरोधोऽस्ति तत्र स्वरादिज्ञापकतया शब्दसाधुत्वपरतया वा उप-योग इति न वृत्तिग्रहेऽपि व्यापारः।

यथोक्तं -

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिरिति।

क्वचिदुपमानेनापि वृत्तिग्रहः। तथाहि - कश्चित् आरण्यकं ग्रामीणः पृच्छति - कोऽसौ गवयशब्दवाच्यः? इति। तं प्रत्याह - यथा गौस्तथा गवय इति। ततः कस्मिंश्चित् पिण्डे गोसादृश्य-मनुभवति। स एव उपमानमुच्यते। तेन च असौ गवयशब्दवाच्य इति जानन् गवयशब्दस्य पुरोवृत्तिमृगविशेषे शक्तिं गृह्णाति। 'घटः करीरः कलशः पुण्डरीकं सिताम्भोजम्' इत्यादिकोशात् स्फुट एव वृत्तिग्रहः।

क्वचित् प्रसिद्धपदसामानाधिकरण्यात्। 'पुष्पितः किंशुकः' इत्यादौ पुष्पितपदसामानाधिकरण्यात् किंशुकशब्दस्य वृक्ष-विशेषे। यथा च 'यवमयश्चरुर्भवति' इत्यादौ यवशब्दस्य -

वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥

इत्यादिप्रसिद्धसमभिव्याहारात् धान्यविशेषे। यथा च 'तदेव ब्रह्म परमं कवीनाम्' इत्यत्र ब्रह्मशब्दस्य 'यमन्तः समुद्रे कवयो वदन्ति' इति समुद्रशायित्वादिप्रतिपादकप्रसिद्धपदसमभिव्याहारात् नारायणे। यथोक्तम् –

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति।

तस्मादनुमाने व्याप्तिरिव शब्देऽपि प्रतिपादकत्वरूपसम्बन्धात्मिका वृत्तिरस्तीति युक्तं शब्दस्य प्रामाण्यम्।

## वृत्तिविभागः

सा च वृत्तिर्द्वेधा। लौकिकी अलौकिकी चेति। लौकिकी वृत्तिर्द्विविधा। मुख्यामुख्यभेदात्। मुख्यवृत्तिरपि त्रिविधा। योगरूढिः रूढिः योगश्चेति। योगसापेक्षाऽखण्डशक्तिः योगरूढिः। यथा पङ्कजशब्दस्य पङ्कजनिकर्तृत्वविशिष्टपद्मे। अत्र हि अवयवशक्त्या पङ्कजनिकर्तृत्वरूपविशिष्टार्थप्रतिपादनद्वारा पद्मत्वविशिष्टपद्मप्रतिपादकाखण्डशक्त्या च पङ्कजनिकर्तृत्वविशिष्टपद्मप्रतिपादकता। न च तत्र शक्तिद्वयकल्पनं व्यर्थमिति वाच्यम्। योगाभावे पङ्कजनिकर्तृत्वोपस्थितेरभावापत्तेः। समुदायशक्त्यभावे पद्मत्वोपस्थित्यभावापत्तेः। पङ्कजनिकर्तृत्वविशिष्टपद्मत्वोपस्थितेर्योगरूढिभ्यां विनानुपपत्तेः। 'पङ्कजं कुमदमानय' इत्यादौ

प्रयुक्तस्य पङ्कजशब्दस्य योगरूढत्वमस्ति न वा? नेति पक्षे पूर्वोक्तिव्याघातः। आद्ये पङ्कजनिकर्तृपद्मोपस्थितिप्रसङ्गेन कुमुदान्वयानुपपत्तिः। 'कुमुदं न पद्मम्' इति चेत् सत्यम्। तत्र योगो रूढिश्चास्ति। तथापि तत्र कुमुदपदश्रवणेन तदन्वयसिद्ध्यर्थम् अखण्डशक्तिः मूकी भवति। न स्वार्थमुपस्थापयतीति यावत्। अस्यां दशायां योगमात्रेण पङ्कजनिकर्तृमात्रोपस्थितौ कुमुदान्वयो युज्यते। यथा 'गङ्गायां घोषः' इत्यादौ गङ्गापदनिष्ठप्रवाहशक्तिमूकीभावेन लक्षणया तीरमात्रोपस्थितौ घोषान्वयः। यथा वा अश्वे 'सैन्धवमानय' इत्यादौ प्रयुक्तसैन्धवशब्दे लवणप्रतिपादकत्वशक्तिसद्भावेऽपि तन्मूकीभावेन अश्वमात्रप्रतिपादकता। अत एव पङ्कजादिशब्देषु कुमुदबाधनार्थं लक्षणेत्युक्तं निरस्तम्।

समुदायशक्तिः रूढिः। यथा डित्थादिशब्दानां पुरुषविशेषे। तत्र हि डित्थादिप्रतिपादकनिष्ठया अखण्डया शक्त्या विशिष्टार्थप्रतिपादकता। तदवयवशक्तिः योगः। यथा पाचकादिशब्देषु। अत्र हि पाचकशब्दावयवभूतपचिधातुनिष्ठया शक्त्या पचनक्रियाप्रतिपादकता। प्रत्ययनिष्ठया अवयवशक्त्या कर्तृप्रतिपादकता। एवमाभ्यां समभिव्याहारबलात् पाककर्तृविशिष्टार्थप्रतिपादकता। न पुनस्तत्प्रतिपादनाय विशिष्टे पाचकशब्दे शक्त्यन्तरमस्ति। अनन्यलभ्यत्वाभावात्। एतेन सर्वे शब्दाः रूढा एवेति वदन्तो निरस्ताः। उक्तोदाहरणत्रयबलेन त्रैविध्यस्यैव वक्तव्यत्वात्।

किञ्च सर्वे रूढा एव न यौगिकाः सन्ति। कृत्तद्धितसमासकरणं तु व्युत्पत्तिमात्रार्थमिति चेन्न। 'पाचकः औपगवः राजपुरुषः' इत्यादौ न रूढिः सम्भाव्यते। कृतद्धितसमासविधानबलेन तेषां पदानां सखण्डत्वावगमात्। न हि सखण्डे अखण्डशक्तिरस्ति।

### तत्पुरुषे लक्षणादिभङ्गः

एवं राजपुरुष इत्यादि तत्पुरुषे राजपदशक्त्या राज्ञः उपस्थितिः। राज्ञः पुरुष इति व्यासवाक्ये श्रुतायाः सम्बन्धे शक्तायाः षष्ठ्याः इह समासे लुप्तायाः पुनस्मरणे षष्ठीविभक्तिगतया शक्त्या सम्बन्धोपस्थितिः। यथा दधि पश्येत्यादौ लुप्तद्वितीयया कर्मत्वोपस्थितिः। पुरुषपदशक्त्या पुरुषोपस्थितिः इत्येवम् अवयवशक्तिभिरेव राजसम्बन्धिपुरुषोपस्थितिसम्भवे रूढिः न कल्प्यते। नापि लक्षणा।

अन्ये तु – विरुद्धविभक्त्यनवरुद्धनामार्थयोरभेदान्वयबोधकत्वम् इति नीलोत्पलमित्यादि कर्मधारये क्लृप्तस्य त्यागायोगेन राजपुरुष इत्यादि तत्पुरुषे राजाभिन्नपुरुष इति शाब्दबोधापत्तिभयात् राजपदस्य राजसम्बन्धे तत्सम्बन्धिनि वा लक्षणा वक्तव्या - इत्याहुः। तन्न। 'घटो न पटः' 'चन्द्र इव मुखम्' इत्यादौ व्यभिचारात्। तत्र हि घटपटनामार्थयोः घटपटयोः चन्द्रमुख-नामार्थयोः चन्द्रमुखयोः प्रतियोग्यनुयोगिभावादिनैव अन्वयो दृश्यते। न त्वभेदेन। तथाच – कर्मधारयदर्शनमात्रेण नियमा-

सिद्धेरभेदान्वयबोधापत्तिभयात् न लक्षणा। किन्तूक्तरीत्या लुप्त-षष्ठीस्मरणेन विवक्षितान्वयबोधोपपत्तिः।

एतेनाखण्डशक्तिकल्पनमपि निरस्तम्। राजपुरुषशब्दावयव-भेदस्य स्फुटप्रतीतेः सम्बन्धे तदनुपपत्तेः। अत एव 'तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षते'[१] इति श्रुतिरपि 'देवानां वामो वामदेवः' इति तत्पुरुषे योगवृत्तिं दर्शयति। यदप्याचक्षत इति प्रयोगबाहुल्य-प्रदर्शनेन रूढिरपि प्रतीयते। तथापि वामदेवशब्दस्य स्पष्टं सखण्डत्वप्रतीतेर्न तत्र तात्पर्यम्।

**बहुव्रीहौ लक्षणाभङ्गः**

एवं चित्रगुः, व्यूढोरस्कः, द्विमूर्द्धः, व्याघ्रपात्, प्रज्ञुः, सञ्ज्ञुः, उद्गन्धिः, केशाकेशी युद्धं, इन्द्रशत्रुः इत्यादि बहु-व्रीहिसमासे 'चित्रा गावो यस्य सः' 'व्यूढमुरो यस्य सः' 'द्वौ मूर्द्धानौ यस्य सः' 'व्याघ्रस्य पादाविव पादौ यस्य सः' 'प्रकृष्टं जानु यस्य सः' 'सम्यग् जानु यस्य सः' 'उद्गतो गन्धो यस्मात् तत्' 'केशेषु ग्रहणं यस्मिन्' 'इन्द्रः शत्रुः यस्य सः' इत्यादि -विग्रहेऽस्मिन् व्यासवाक्यबलेनावयवार्थपुरस्कारेण चित्रगो-स्वाम्यादिव्यक्तिविशेषस्य मुख्यार्थानुपपत्त्यादिप्रतिसन्धानादि विलम्बमन्तरा रूढ्यै पङ्कजादिशब्देष्विव प्रतीतेः अनुभवसिद्धत्वेन

1 ऐतरेयोपनिषदि

योगरूढिः। न तु गवाद्युत्तरपदेषु लक्षणा। 'गङ्गायां घोषः' इत्यादाविव मुख्यार्थानुपपत्तेः प्रतिसन्धानापातात्।

केचित्तु समासान्तप्रत्ययस्य कबादेः[1] अन्यपदार्थे शक्तिः। उकारादिविकारस्य वा अन्यपदार्थे शक्तिरित्याहुः । पक्षद्वयेऽपि बहुव्रीहौ न लक्षणा। अत एव श्रुतौ 'तद्यदस्येदं विश्वं मित्र-मासीत्। यदिदं किञ्च तस्माद् विश्वामित्रस्तस्माद् विश्वामित्र इत्याचक्षते' - इत्यत्र विश्वामित्रशब्दस्य बहुव्रीहौ निर्वचनेन योगः। आचक्षत इत्यनेन रूढिश्चेति स्वयमेव श्रुतिः स्पष्टमाह। नारायणशब्देऽपि [2]अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः इति स्मृतिश्च योगरूढिमेवाह ॥

## कर्मधारये लक्षणाभङ्गः

'नीलोत्पलम्' इत्यादि कर्मधारयेपि व्याससमासयोरेकार्थत्व-नियमेन 'नीलं च तत् उत्पलं च' इति व्यासवाक्ये श्रुतनील-पदोत्तरप्रथमाविभक्तेः अभेदान्वये शक्त्यङ्गीकारेण समासे लुप्तया प्रथमाविभक्त्या अभेदबोधः। न त्वभेदे विशेषणविभक्तेः शक्तिं लक्षणां च विना नामार्थयोरभेदान्वयबोधकत्वनैयत्या संसर्गविधयै-वाभेदबोध इति युक्तम्। तादृशनियमस्य 'चन्द्र इव मुखम्'

---

1 उरः प्रभृतिभ्यः कप् इत्यादिनोक्तकप्रत्ययादीनामित्यर्थः।

2 आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

इत्यादौ व्यभिचारस्य दर्शितत्वात्। तस्माद् विशेषणगत-समानविभक्तेः अभेदे शक्त्यभावे तद्घटितान्वयबोधो न स्यादिति विशेषणविभक्तेः तत्र शक्तिरेव। अत एव –

नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः।
ऐक्यदृष्टिः ...[(१)]

इत्यनेन समानविभक्तेः अभेदे शक्तिरिति सूचितम्।

**द्वन्द्वे साहित्ये लक्षणाभङ्गः**

एवं धवखदिरौ छिन्दीति इतरेतरयोगद्वन्द्वे तुल्यद्वारत्वादि रूपं साहित्यम्। यथा चक्षुषा युगपदिन्द्रियसन्निकृष्टौ सहिताव-स्थितामेव घटपटस्वरूपौ गृह्यते, तथैव धवशब्दानुभवजनित-संस्कारसहकृतश्रोत्रसन्निकृष्टखदिरशब्देन धवशब्देन च युगपदु-पस्थितं सहितावस्थितमेव धवखदिरस्वरूपं तत्र शक्त्यैवोप-स्थाप्यते। न तत्र साहित्योपस्थित्यर्थं लक्षणाङ्गीकार्या। एतेन धवखदिरावित्यत्र शुद्धयो धवखदिरयोः द्वित्वान्वये चत्वारः प्रतीयेरन्। अतः सहितावस्थयोरेव द्वित्वम्। तत्सिद्ध्यर्थं साहि-त्योपस्थितिरावश्यकी। साहित्यं च न धवखदिरपदशक्तिभ्याम्

---

1 .......: इति भ्रान्तिरबुधानां भविष्यति।
नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते।
सर्वार्था प्रथमा यस्मात् सप्तम्यर्था ततो मता॥
–इति न प्रतीकाधिकरणे (४-२-३) - भाष्योदाहृतब्रह्मतर्कवचनम्

उपस्थापयितुं शक्यमिति तदर्थं लक्षणा आवश्यकीति निरस्तम्। उक्तरीत्या धवखदिररूपावयवशक्त्यैव सहितावस्थयोरुपस्थिति-सम्भवात्।

एवं पाणिपादं वादयेत्यादिसमाहारद्वन्द्वे पाणिपादयोः समा-हारः इति विग्रहबलेन समासे लुप्तसमाहारपदेनैव समाहारोप-स्थितिसम्भवेन तदर्थं न लक्षणावृत्तिः। किन्तु अवयवशक्त्यैव। एवं घटश्च घटश्च घटौ, सैन्धवश्च सैन्धवश्च सैन्धवौ, वक्रदन्तश्च कुटिलदन्तश्च वक्रदन्तौ, पिता च माता च पितरौ इत्यादिषु सरूपविरूपसमानार्थासमानार्थाद्येकशेषस्थळेषु . यः शिष्यमाणः सः लुप्यामानार्थाभिधायीत्यादिन्यायेन लुप्तशब्दस्मरणेन तत्र च क्लृप्तया अवयवशक्त्यैव तत्तदर्थोपस्थितिसम्भवः। न तु लक्षणा-स्वीकारः।

तथाच एवं सर्वेष्वपि समासेषु अवयवशक्तिरङ्गीकृतेति सर्वेऽपि शब्दाः रूढा एवेति पक्षो न युक्तः।

एवं सर्वेऽपि शब्दाः यौगिका एव न रूढाः शब्दाः सन्तीति पक्षोऽपि न क्षोदक्षमः। चकारे एवकारे च योगस्यासम्भवेन रूढेरङ्गीकार्यत्वात्। चकारस्य 'धवखदिरौ छिन्दि', 'वटो भिक्षाम् अट, गां च पश्यसि चेदानय', 'धवं छिन्दि खदिरं च' 'पाणिपादं वादय' इत्यादेः [1]समुच्चयान्वाचयेतरेतरयोगसमाहारा

1 उभयत्र क्रियान्वयस्योद्देशत्वे समुच्चयः। एकगतस्यैवोद्देश्यत्वे अन्वाचयः।

त्मक-अर्थचतुष्टये प्रयोगात्। तत्प्रत्यायकत्वम् अवयवशक्ति-निरपेक्षमेवास्ति।

एवकारस्य च 'शङ्खः पाण्डुर एव', 'पार्थ एव धनुर्धरः' इत्यादिबहुप्रयोगदर्शनेन अयोगान्ययोगव्यवच्छेदयोः प्रत्याय-कत्वम् अवयवशक्तिनिरपेक्षमेवास्ति। एवं 'भूतळे घटो नास्ति', 'असुराः', 'घटः पटो न भवति' इत्यादिना प्रतिषेधविरोध-तदन्यत्वेषु त्रिष्वप्यर्थेषु प्रयोगाद् नञः रूढ्या अर्थत्रयप्रत्या-यकत्वम् अवयवशक्तिनिरपेक्षमेवास्ति। ननु नञः 'भूतळे घटो नास्ति' इत्यादिबहुप्रयोगात् प्रतिषेध एव रूढिः। न तु विरोध-तदन्यत्वयोः लक्षणया प्रतीत्युपपत्तेः। अत एव 'अमानोनाः प्रतिषेधे' इत्येव नञोऽनुशासनम्। अर्थात् तयोः लक्षणा इति चेन्न। उक्तरीत्या बहुप्रयोगतौल्येपि अर्थान्तरे लक्षणाङ्गीकारे चकारैवकारयोः समुच्चयायोगव्यवच्छेदयोरेव रूढिः, अर्थान्तरे लक्षणैवेत्यापातात् यत्र अनुशासनं तत्र यथा रूढिः तथैव अन्यत्र रूढिसद्भावेप्युपपन्नम्। किञ्च अमानोनावाक्ये न शब्देन नञैव न विवक्षितः। तथा सति नकारेण अकारस्य गृहीतत्वात् पुन-रुक्तिः स्यात्। अत एव माशब्देन न माङः सङ्ग्रहः। मास्त्वि-

---

धवखदिरौ छिन्दीति इतरेतरयोगे पाणिपादमित्यादि समाहारे चान्योन्या-सापेक्षयोरेव क्रियान्वयात् समासः। तत्र धर्मिप्राधान्येतरेतरयोगः साहित्यरूप-धर्मप्राधान्ये तु समाहारः। – तर्कताण्डवे.

त्यादिलोट्प्रयोगो न स्यात्। माङि लुङिति प्रत्ययान्तरनिषेधात्। एवं 'नदी गच्छति' 'जलं याति', 'रथो गच्छति' इत्यादि-बहुप्रयोगदर्शनेन आख्यातस्य व्यापारे रूढिः। गमनाद्यनुकूल-व्यापाराश्रय इति प्रतीतेः। ननु पचति पाकानुकूलयत्नवान् देवदत्तः एकः, पाकविषयकोत्पादनक्रियाश्रयो देवदत्त एक इति वा विवरणमङ्गीकृत्य यत्नः उत्पादनक्रिया सङ्ख्या वा आख्या-तार्थः। न तु व्यापार इति चेन्न। रथो गच्छतीत्यादौ अन्वयानु-पपत्तेः।

किञ्च ओदनं कुर्यादित्यादौ श्रुतस्य लिङः इष्टसाधनत्वे रूढिः। ननु अपूर्वे लिङः शक्तिः न त्विष्टसाधनत्वे। अन्यथा 'चन्द्रमण्डलमानय' इत्यादावपि इष्टसाधनत्वबोधप्रसङ्गः। न कलञ्जं भक्षयेदित्यादौ निषेधानुपपत्तिश्च। मैवम्। ओदनं कुर्यादि-त्यादि लौकिके अपूर्वबोधकत्वाभावात्। वैदिकनिष्ठमेव अपूर्व-वाचकत्वमिति कल्पनं तु निर्मूलम्। अपूर्वसिद्धिस्तु यजेत स्वर्ग-काम इत्यादौ यागस्वर्गयोः प्रतीतसाध्यसाधनभावानुपपत्त्या भवति। चन्द्रमण्डलादौ इष्टसाधनत्वबोधो नानिष्टः। ततः प्रवृत्त्यापत्तिस्तु कृत्यसाध्यत्वस्य निश्चितत्वान्न भविष्यति। निषेध-स्वप्रवृत्तिनिर्वाहत्वेन क्लृप्तबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्व-ज्ञानान्तर्गतस्य बलवदनिष्टाननुबन्धित्वांशस्य बाधो भविष्यति। तदेवं रूढिमात्रस्य योगमात्रस्य योगरूढेश्चोक्तरीत्या असङ्कीर्णोदा-

हरणबलेन त्रैविध्यस्यापि दर्शनेन सर्वे शब्दा रूढा एव वा यौगिका एवेति, नियमपक्षोऽनुपपन्न इति मुख्यवृत्तिस्त्रिविधेति सिद्धम्।

अमुख्यवृत्तिरपि द्विविधा। गौणीलक्षणा चेति। सादृश्य-निबन्धना वृत्तिर्गौणी। सा द्विविधा। निरूढानिरूढभेदात्। तत्र प्रयोजनानपेक्षा निरूढगौणी। यथा चित्रलिखितसिंहस्य प्रसिद्ध-सिंहसादृश्येन प्रयुक्ते अयं सिंह इति सिंहशब्दे। प्रयोजनापेक्षा द्वितीया। यथा क्रौर्यादिज्ञापनाय सिंहो माणवक इति प्रयुक्ते सिंहशब्दे। मुख्यार्थसम्बन्धनिबन्धना वृत्तिः लक्षणा। सा द्विविधा। निरूढानिरूढभेदात्। प्रयोजनानपेक्षा सम्बन्धनिबन्धना वृत्तिराद्या। यथा- मृद्गवादौ प्रयुक्ते गोशब्दे। प्रयोजनापेक्षा द्वितीया यथा - पूतत्वादिज्ञापनाय नदीतीरे प्रयुक्ते गङ्गापदे। यद्यपि सादृश्यस्य इदमनेन संयुक्तमित्यादाविव इदमनेन सदृश-मिति संयोगसम्बन्धतुल्यतया प्रतीतेः सम्बन्धत्वमस्तीति गौणी-लक्षणयोः सम्बन्धनिबन्धनत्वाविशेषात् नात्यन्तं भेदः। तथापि इदमनेन भिन्नः, इदमनेन विभक्तम्, इदमस्माद् दीर्घमित्यादिप्रतीतौ संयोगादितुल्यतया प्रतीतस्यापि भेदविभागदीर्घत्वादेः सम्बन्ध-त्वानङ्गीकारेण सादृश्येऽपि तथा प्रतीतेः सम्बन्धत्वनियामकत्वा-भावेन सादृश्यं सम्बन्धात् पृथगेवेति तन्निबन्धनो गौणीलक्षणायो-र्भेदो युक्त एव । तदेवं योगरूढिः, रूढिः, योगः, निरूढगौणी,

अनिरूढगौणी, निरूढलक्षणा, अनिरूढलक्षणा चेति लौकिकी वृत्तिः सप्तविधा।

**रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः**

तत्र पूर्वपूर्वासम्भव एव उत्तरोत्तरग्रहणम्। न पुनः पूर्वपूर्वसम्भवे। पूर्वपूर्वयोः प्राबल्यात्। तथाहि - पङ्कजमानय इत्यादौ योगेन प्रतीतस्य कुमुदस्य, रूढ्या प्रतीतस्य स्थलकमलस्य (पद्मस्य) च योगरूढ्या समाहारवृत्त्याऽपहारेण पङ्कजनिकर्तृत्वविशिष्टं जलपद्ममेव प्रतीयते। नन्वत्र योगरूढ्या वृत्त्यन्तरापहारो नाम न तावत् तदभावसम्पादनम्। प्रतिपादकत्वरूपवृत्तेः शब्दस्वभावत्वेन तदभावस्यासम्पाद्यत्वात्। न ह्यौत्पत्तिकः शब्दार्थयोः सम्बन्धः केनचिदुत्सादयितुं शक्यते। नापि तदबोधकत्वसम्पादनम्। वृत्तिसद्भावे तद्बोधावश्यम्भावात्। अन्यथा योगरूढिवृत्तेरपि तदापातात्। यद्यपि मण्यादिः वह्निगतदाहकत्वशक्तिं नोत्सादयति दाहकशक्तेः सहजत्वात्। तथापि तादृशशक्तिं कुण्ठयति। यथा च मण्यादिना कुण्ठितशक्तिर्वह्निर्न दहति। तथेहापि पङ्कजशब्दनिष्ठसमाहारवृत्तिः तन्निष्ठां कुमुदप्रत्यायिकां रूढिं स्थळकमलप्रत्यायिकां योगवृत्तिं च कुण्ठयति। ततश्च समाहारकुण्ठितशक्तिकं तद्वृत्तिद्वयं विद्यमानमपि मूकवत्तिष्ठति। स्वार्थं न प्रत्याययति। तथाच - स्वार्थबोधनिरोधकत्वरूपमूकीभावसम्पादनमेवापहार इति समाहारवृत्तेः रूढ्यपेक्षया

प्राबल्यम्। एवमग्रेऽपि। तथा रूढिवृत्तेः रथकारशब्दगतयोग-वृत्त्यपहारकत्वाद् योगात् प्राबल्यम्। अत एव वर्षासु रथकारोऽग्नीनादधीतेत्यादौ रथकारशब्देन यौगिकार्थपरित्यागेन रूढार्थस्य जात्यन्तरस्यैव वाक्यर्थान्वयः। तथा हिंसकपुरुषविवक्षया अयं सिंह इति प्रयुक्ते सिंहशब्दे योगेन सिंहसादृश्यप्रतीत्यपहारात् निरूढगौणीतो योगस्य प्राबल्यम्। तथा चित्रलिखितसिंहसादृश्य-विवक्षया प्रयुक्ते अयं सिंह इति वाक्ये सिंहशब्दगतनिरूढगौणीवृत्त्या अनिरूढगौण्या हिंसकत्वादिज्ञापनप्रयोजनवत्त्या तत्तदर्थप्रतीत्या अपहारात् अनिरूढगौणीतो निरूढगौण्याः प्राबल्यम्।

तथा 'सिंहो माणवकः' इत्यादौ क्रौर्यादिज्ञापनरूपप्रयोजनवत्या अनिरूढगौणीवृत्तेः सादृश्यघटितत्वेन उक्तरीत्या शीघ्रोपस्थिति-कत्वात् सम्बन्धसामान्यघटिताया निरूढलक्षणाया विशेषे पर्यव-सानाय विलम्बितोपस्थितिकत्वेन मन्दगामित्वात् तदर्थप्रतीत्या अपहारात् निरूढलक्षणात अनिरूढगौण्याः प्राबल्यम्। तथा 'घटं करोति'[१] इत्यादौ घटनिष्ठप्रयोजनापेक्षया निरूढलक्षणावृत्त्या पावित्र्यादिज्ञापनप्रयोजनसहितगङ्गापदनिष्ठ अनिरूढलक्षणावृत्ति-

---

1 घटं करोतीत्यादौ घटपदनिष्ठप्रयोजनानपेक्षनिरूढलक्षणावृत्त्या मूलप्रतीत्य-पहाराद् गङ्गायां घोष इत्यादि तु पावित्र्यादिज्ञापनप्रयोजनसहितगङ्गापद-निष्ठाऽनिरूढलक्षणावृत्त्या मूलप्रतीत्यपहारात् निरूढलक्षणाया अनिरूढ-लक्षणातः प्राबल्यमिति पाठेन भाव्यमिति भाति।

मूलप्रतीत्यपहारात् निरूढलक्षणायाः अनिरूढलक्षणातः प्राबल्यम् । तदुक्तं पूर्वायोगे परग्रहः इति[१] ॥

ननु 'वेदे रामायणे चैव', 'वेदैश्च सर्वैरहमेव वेद्यः', 'ता वा एता सर्वा ऋचः' इत्यादिवाक्यैर्ब्रह्मणः सर्वशब्दप्रतिपाद्यत्वमवगम्यते । तच्च वृत्तिमन्तरा नोपपद्यते । अन्यथा अन्यत्र वृत्त्यङ्गीकारवैयर्थ्यात् । न तावत् ब्रह्मणि त्रिविधा मुख्यवृत्तयः सम्भवन्ति । उक्तरीत्या पङ्कजादिशब्दानां जलकमलादावेव मुख्यवृत्तेर्निश्चितत्वात् । यद्यपि नारायणादिशब्दानां सम्भवन्ति । तथापि न सर्वेषां पङ्कजादिशब्दानाम् । तेषामन्यत्रैव वृत्तेः क्लृप्तत्वात् । यद्यप्यक्षादिशब्दवदुभयत्रापि मुख्यवृत्तिः सम्भवति । तथाप्यनेकार्थत्वमन्याय्यमापद्यते । ता अपि निरूढगौण्याद्यमुख्यवृत्तयः सर्वेषां शब्दानां ब्रह्मणि सम्भावयितुं न शक्याः । सर्वशब्दवाच्यस्य अमुख्यवृत्त्ययोगात् । न च नारायणादिशब्दोऽपि वाच्ये अमुख्यवृत्तिः किं न स्यादिति वाच्यम् । सवर्शब्दानां मुख्यवृत्तिस्वीकारव्याघातात् । न हि नारायणादिशब्दवाच्ये सर्वशब्दानाममुख्यार्थत्वं घटते । नारायणादिशब्दानामपि सर्वशब्देन ग्रहणात् । न च मुख्यामुख्यवृत्तिव्यतिरेकेण वृत्त्यन्तरमस्ति । गौरवात् । उच्यते । मुख्यायोगे ह्यमुख्ययोः स्वीकारः । यदि तयोरयोगे परममुख्यायाः (स्वीकारं) किं न मन्यसे । त्वयैव ब्रह्मणि मुख्यामुख्यवृत्त्योरसम्भव

1 प्रयोगयुक्तसादृश्यं सम्बन्धोऽवाप्यमुख्यतः ।
वृत्तिहेतुरितिज्ञेयः पूर्वायोगे परग्रहः ॥ – अनुव्याख्याने

उक्तः । वेद्यत्वं चोक्तवचनादवसीयते। नच औपनिषदस्य वचनं विना वेदनं सम्भवति। वचनं च काच(ञ्च)नवृत्तिमवलम्ब्यैव वेदयेत्। अन्यथा व्याघातानिस्तारादित्यवश्यं वृत्त्यन्तरं स्वीकार्यम्। तत्र परममुख्यवृत्त्याख्यं वृत्त्यन्तरं स्वीकर्तुमुचितम्। मुख्यवृत्तेः शक्यार्थघटितत्वेनानवस्थानात्। 'वचसां वाच्यमुत्तमम्' इति वाच्यत्वोक्तिविरोधाच्च। प्रत्युत तत्राङ्गीकार्यवृत्तेः परमशब्दपर्यायोत्तमशब्देन परममुख्यत्वोक्तेश्च। तथाच यथा 'गङ्गायां घोषः' इत्यादौ मुख्यवृत्त्यसम्भवेन अमुख्यवृत्तिः स्वीक्रियते, तथाच मुख्यामुख्यवृत्त्योः उक्तरीत्याऽसम्भवात् परममुख्याख्यं वृत्त्यन्तरमङ्गीकार्यमेव। 'वचसां वाच्यमुत्तमम्' इति वचनप्रमाणात्। न चैवं गौरवम्। न हि वचनस्यातिभारोस्तीति न्यायात्। अत एव नानार्थत्वप्रसङ्गोऽपि निरस्तः। (परममुख्यवृत्त्या) केवलं ब्रह्म प्रतिपाद्यं स्वीकृतम्। परममुख्याख्यं वृत्त्यन्तरं ब्रह्मण्यैव नान्यत्रेत्यङ्गीकारात्। एकयैव वृत्त्या एकशब्दस्यानेकार्थप्रतिपादकत्वे ह्यनेकार्थता। न तु वृत्त्यन्तरेणापि। अन्यथा गङ्गापदस्य प्रवाहतीरोभयप्रतिपादकत्वेनानेकार्थत्वापातात्। अत एव न लोकव्यवहारविरोध इति। न वा क्लृप्तस्यासिद्धिः। अन्यत्र वृत्त्यन्तरानिवारणात्। न हि तीरे गङ्गापदस्य वृत्त्यन्तरमाश्रितमित्येतावता गङ्गापदेन प्रवाहव्यवहारो न लभ्यते। न वा प्रवाहस्वरूपसिद्धिः।

न च तर्हि सर्वैः शब्दैरहमेव वेद्य इति विरोधः। परममुख्यवृत्त्या अभिप्रायेणोपपत्तेः। सा च परममुख्यवृत्तिर्द्विविधा। महायोगो महारूढिश्चेति। महायोगरूढिस्तु महायोगस्य रूढ्यविनाभावादेव न विधान्तरम्। तत्रालौकिकप्रवृत्तिनिमित्तद्वारा अलौकिकार्थप्रतिपादकत्वं महायोगः। यथा अदितिशब्दस्य ब्रह्मणि। अत्र हि 'सर्वं वा अत्तीति तददितेरदितित्वमि'ति श्रुत्या प्रदर्शितं सर्वात्तृत्वं रूपमदितिपदवृत्तिनिमित्तं न क्वचिदपि ब्रह्मेतरस्मिन् लौकिके वस्तुनि प्रसिद्धम्। न वा तदाश्रयो ब्रह्म (प्रसिद्धम्)। अलौकिकप्रसिद्धिबाहुल्यं महारूढिः। यथा ब्रह्मशब्दस्य परब्रह्मणि। अत्र हि 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुत्या विद्वत्प्रयोगबाहुल्यमुपदर्श्यते। अत एव प्रकृत्यधिकरणे अर्थप्रसिद्धिप्राबल्यव्युत्पादनेन विद्वद्रूढिः समर्थिता। सैव महारूढिरित्युच्यते। एवमन्येषां घटपटादिशब्दानां ब्रह्मणि वृत्तिः।

ननु दुःखिकुष्ठीत्यादिशब्दानां ब्रह्मणि वृत्तिर्दुर्घटा। तत्रादितिशब्दादेः सर्वात्तृत्वरूपप्रवृत्तिनिमित्तस्यालौकिकस्येव इह केनचित् प्रमाणेन दुःख्यादिशब्दादेः प्रवृत्तिनिमित्तस्यालौकिकस्यानुपदर्शनात्। न तावन्महायोगः सम्भवति। नापि महारूढिः। विद्वत्प्रयोगबाहुल्यस्यानुपदर्शनात्। न च दुःख्यादिशब्दव्यतिरिक्तानां शब्दानां ब्रह्मणि वृत्तिरिति वाच्यम्। सर्वशब्दसङ्कोचस्य सिद्धान्तानिरूढत्वात्। मैवम्।

“तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम्। स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्मध्यमास्तस्मात् मध्यमा इत्याचक्षत एतमेव सन्तम्”

इत्यादिनानोपलक्षणतया सर्वेषां शब्दानां निरुक्तत्वात्। ननु ‘दुःखमस्यास्तीति दुःखी, रूपमस्यास्तीति रूपी’ इत्यादि निर्वचनस्य श्रुतिसूचितत्वेन भगवतो दुःखप्राप्तिः। तदभावे दुःख-वत्त्वरूपप्रवृत्तिनिमित्ताभावेन तच्छब्दवाच्यता न स्यात्। मैवम्। दुःखस्वामित्वरूपपदप्रवृत्तिनिमित्तमाश्रित्य निर्वचनोपदर्शनात्। न च प्रवृत्तिनिमित्तस्वामित्वं न पदप्रयोगे निमित्तं दृष्टमिति वाच्यम्। ‘राजा जयी धनी गोमान्’ इत्यादौ तद्दर्शनात्। भृत्यगतजय-धनगवादेः प्रवृत्तिनिमित्तस्य साक्षात् राजनिष्ठत्वाभावात्। अस्तु वा क्वाप्यदर्शनम्। तथापि इहालौकिकत्वात् तदेव प्रवृत्तिनिमित्तं युक्तम्। अत एवाचक्षत इत्यादिना सर्वेषां शब्दानां भगवति विद्वद्रूढिरप्युपलक्षणया सूचिता।

न च महायोगविद्वद्रूढ्योरन्यतराङ्गीकारेणैव प्रयोगप्रत्यययो-रुपपत्तावुभयाङ्गीकारवैयर्थ्यम्। प्रतीतिलक्षणकार्यानुसारेण विहितं निमित्तकल्पनम्। अत एव पङ्कजादिशब्देषु पङ्कजनिकर्तृत्वविशिष्ट-पद्मप्रतीतेः केवलयोगेन केवलरूढ्या वा अनिर्वाहात् तदुभय-कल्पनम्। तथेहापि गुणपूर्णत्वविशिष्टपरब्रह्मणो नारायणादिशब्दैः

प्रतीतेरन्यतरमात्रेण निर्वाहाभावात् महायोगो महारूढिश्चेति वृत्तिद्वयमङ्गीकार्यम् । अत एवोक्तरीत्या अलौकिकप्रवृत्तिनिमित्ताद्याश्रयणेनेदं वृत्तिद्वयमलौकिकवृत्तिरुच्यते । अत एव 'अक्ष -रात् परतः परः' इत्यादौ तदुत्कृष्टवत्स्वभावेनोक्तवृत्तिद्वयेन अक्षरशब्दपरममुख्यार्थासम्भव एव अक्षरशब्देन प्रकृत्यादिग्रहणमिति सर्वापेक्षया प्राबल्यम् । तथा चैवं लौकिक्या सप्तविधवृत्तेरलौकिक्या द्विविधाया वृत्तेरभ्युपगमाद्वृत्तिर्नव विधेति सिद्धम् । तथाच अग्निना सिञ्चतीत्यादि वाक्याभासानामबोधकत्वदर्शनमात्रेणोक्तनवविधवृत्तीनां प्राबल्यदौर्बल्यादौ विवेकपूर्वकं गृहीतसङ्गतिकानामाकाङ्क्षासन्निधियोग्यतावतां शब्दानां नाबोधकत्वं शङ्कार्हम् ।

तत्रपदस्यपदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा । सा च ज्ञाता शाब्दबोधे हेतुः । प्रकृतान्वयबोधविरोधिपदव्यवधानाभावः सन्निधिः । सोऽपि ज्ञातो हेतुः । एकपदार्थेऽपरपदार्थसंसर्गसत्ता योग्यता । सा च स्वरूपसत्येव हेतुः । न ज्ञाता । तज्ज्ञानाभावेऽपि तत्संशयव्यतिरेकनिश्चययोः सद्भावेऽपि शाब्दबोधदर्शनात् ।

नन्वथापि 'द्वारं पिधेहि' इति वक्तव्ये द्वारमिति शब्दे विवक्षितान्वयबोधादर्शनात् शब्दः न प्रमाणमिति चेन्न । शब्दन्यायानुसन्धानस्यापि सहकारित्वाभ्युपगमात् । शब्दाध्याहाररूपशब्दन्यायानुसन्धानवतो विवक्षितशाब्दबोधदर्शनात् । अर्थाध्याहारस्तु

नादरणीयः। 'पुष्पेभ्यः स्पृहयति' इत्यादावेव चतुर्थी, 'पुष्पमिच्छति' इत्यादौ तु नेति व्यवस्थाभावप्रसङ्गात्।

यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्।
वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेत्। – इति।

एतेन 'अक्ताः शर्करा उपदधाति' इत्यादौ 'आकाश इति होवाच' इत्यादौ च अक्ताकाशादिशब्दे शक्तिग्रहणादिकारणसम्पत्तावपि घृतघटितवाक्यार्थबोधो ब्रह्मघटितवाक्यार्थबोधश्च न जायत इति शब्दो न प्रमाणमिति निरस्तम्। शब्दन्यायानुसन्धानस्यावश्यकताया उक्तत्वात्।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥
श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा।
पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः॥

इत्यादिना उपक्रमाद्यानुगुण्यानुसन्धानस्य श्रुत्याद्यानुगुण्यानुसन्धानस्य तत्प्राबल्यदौर्बल्यविवेकस्य निरवकाशत्वसावकाशत्वानुसन्धानस्य उपजीव्योपजीवकभावानुसन्धानस्य च शाब्दन्यायत्वावगमात्। एतन्न्यायानुसन्धानरहितस्य विवक्षितवाक्यार्थ -प्रमानुदयेपि तदनुसन्धानवतो भवत्येव तदुदयः। नह्येतावता शब्दस्य कश्चिदपराधोऽस्ति। किन्तु पुरुषस्यैवायमपराध इति शब्दः प्रमाणमेवेति सङ्क्षेपः।

## आगमविभागः

सोऽयं शब्दो द्विविधः। लौकिको अलौकिकश्चेति। अदृष्टासंस्पर्शी शब्दो लौकिकः। अतथाभूतः शब्दः अलौकिकः। स च द्विविधः। अपौरुषेयो पौरुषेयश्चेति। कर्तृप्रसिद्ध्यादिरहितोऽपौरुषेयः। कर्तृप्रसिद्ध्यादिमान् द्वितीयः। तत्राद्यः ऋगादिभेदेन अनन्तविधः। द्वितीयस्तु स्मृतीतिहासपुराणसूत्रादिभेदेन बहुविधः। तेषां हि मन्वादयः कर्तारः प्रसिद्धाः। न च 'ऋचः सामानि जज्ञिरे, छन्दांसि जज्ञिरे तस्मात्' इत्यादिश्रुतिविरोधः। सम्प्रदायप्रवर्तकत्वमात्रेणोपपत्तेः। अन्यथा 'वाचा विरूप नित्यया' इत्यादि श्रुत्या अनादिनित्यत्वोक्तिविरोधः। अदृष्टासंस्पर्शिलौकिकशब्दोऽपि गामानय इत्यादिरूपेण बहुविधः।

### प्रामाण्यस्वतस्त्वसमर्थनम्

ननु वेदस्यापौरुषेयत्वे प्रामाण्यं न स्यात्। तथाहि – प्रामाण्यं द्विविधम्, ज्ञाननिष्ठं करणनिष्ठं चेति। तद्वतितत्प्रकारकज्ञानत्वरूपमाद्यम्। यथार्थज्ञानजनकत्वरूपं द्वितीयम्। एवमप्रामाण्येऽपि प्रभेदोऽस्ति। तत्र वेदनिष्ठं यथार्थज्ञानसाधनत्वरूपं करणप्रामाण्यं वेदजन्यज्ञानस्य प्रामाण्यमपेक्षते। ज्ञानप्रामाण्यं च उत्पत्तौ ज्ञप्तौ च परतस्त्वेन गुणजन्यत्वमपेक्षते। तथाहि – तत्र प्रयोगाः। ज्ञानप्रामाण्यं ज्ञानकारणातिरिक्तकारणजन्यं ज्ञानग्राहकातिरिक्तग्राह्यं वा ज्ञानत्वातिरिक्तज्ञानधर्मत्वादप्रामाण्यवदित्या-

दयः। शाब्दप्रमितौ ज्ञानकारणातिरिक्तं कारणमाप्तोक्तत्वरूपगुण एव। नान्यत्। यथा प्रत्यक्षे अनुमितौ च भूयोवयवेन्द्रियसन्निकर्षः सत्यपरामर्शश्च। तथाच अपौरुषेयत्वपक्षे गुणाद्यभावेन तज्जन्यज्ञाने प्रामाण्यानुपपत्त्या तत्साधने वेदे यथार्थज्ञानसाधनत्वरूपप्रामाण्यानुपपत्तिः। मैवम्। ज्ञानप्रामाण्यस्य ज्ञानकारणातिरिक्तकारणजन्यत्वे तद्ग्राहकातिरिक्तग्राह्यत्वे च अनवस्थादिदोषप्रसङ्गेन उत्पत्तौ ज्ञप्तौ च ज्ञानकारणमात्रजन्यत्वतद्ग्राहकमात्रग्राह्यत्वरूपस्वतस्त्वस्यैव अभ्युपगमात्। ननु आप्तोक्तत्वादिगुणस्य प्रामाण्यं प्रति अन्वयव्यतिरेकाभ्यां कारणत्वग्रहात् परतस्त्वमेव युक्तमिति चेन्न। अनन्यथासिद्धान्वयव्यतिरेकयोरेव कारणताग्राहकत्वेन इह अन्वयव्यतिरेकयोः दोषाभावं प्रति हेतुताग्राहकत्वेनोपक्षीणत्वात् प्रामाण्यं प्रति हेतुत्वाग्राहकत्वात्। नन्वेवमप्रामाण्यस्य दोषजन्यत्वाभावोऽपि स्यात्। तत्रापि दोषान्वयव्यतिरेकयोः गुणाभावसम्पादकत्वेन उपक्षीणत्वेनाप्रामाण्यं प्रति न हेतुत्वमिति वक्तुं शक्यत्वादिति चेन्न। दोषस्य अप्रामाण्यगुणाभावोभयं प्रति हेतुत्वाङ्गीकारात्। न चेहापि गुणस्य उभयहेतुत्वमङ्गीकर्तुं शक्यम्। यादृच्छिकसंवादिनि गुणाभावेऽपि प्रामाण्यदर्शनेन व्यतिरेकव्यभिचारेण प्रामाण्यं प्रत्यपि हेतुत्वानुपपत्तेः। ननु तत्रापि दोषे सति अप्रामाण्यमित्यन्वयस्य यादृच्छिकसंवादिनि व्यभिचाराद् गुणाभावसम्पादनेन अन्यथा-

सिद्धत्वात् नोभयहेतुत्वमिति अप्रामाण्यस्य दोषजन्यत्वानुपपत्तिरेव। न च इष्टापत्तिः। अप्रामाण्यस्य परतस्त्वसिद्धान्तविरोधात् इति चेदुच्यते - अन्वयव्यभिचारो हि न हेतुत्वविरोधि। दण्डे सत्यपि कदाचित् घटानुत्पत्तिदर्शनेऽपि तत्कारणत्वदर्शनात्। व्यतिरेकव्यभिचारस्तु न तथा। न हि दण्डाभावे कदाचित् घट उत्पद्यते। तेन दोषाप्रामाण्ययोः व्यतिरेकव्यभिचाराभावेन कार्यकारणभावः सुग्रहः। गुणप्रामाण्ययोरन्वयव्यभिचाराभावेऽपि व्यतिरेकव्यभिचारसद्भावेन कार्यकारणभावो न सुग्रह इति गुणदोषाभावयोरेव कार्यकारणभावो गृह्यते। दोषस्य तूक्तरीत्या व्यतिरेकव्यभिचाराभावेनाप्रामाण्यं प्रत्यपि हेतुत्वं गृह्यते इति वैषम्यम्। तथाच उक्तप्रामाण्यद्वयं स्वत एव जायते ज्ञायते चेति वेदनिष्ठप्रामाण्यमाप्तोक्तत्वादिगुणानपेक्षमिति वेदस्यापौरुषेयत्वे न किञ्चित् बाधकमिति सङ्क्षेपः।

ननु यथार्थज्ञाननिष्ठप्रामाण्यं परतः उत्पद्यते ज्ञानसामान्यकारणातिरिक्तकारणजन्यमिति यावत्, ज्ञानत्वातिरिक्तज्ञानधर्मत्वात् अप्रामाण्यवत्। अप्रामाण्यं हि ज्ञानसामान्यकारणचक्षुःसन्निकर्षव्याप्तिज्ञान-शक्तिज्ञानाद्यतिरिक्तकारणेन भूयोवयवसन्निकर्षाभावव्याप्त्यभावाप्तोक्तत्वाद्यभावादिदोषेण जन्यम्। तद्दृष्टान्तेन प्रामाण्येपि उक्तज्ञानसामान्यकारणातिरिक्तभूयोवयवेन्द्रियसन्निकर्षव्याप्तिसद्भाव-आप्तोक्तत्वादिगुणजन्यत्वं साध्यते। एवं ज्ञानप्रामाण्यं

परतो ज्ञायते एव, अप्रामाण्याग्राहकयावद्-ज्ञानग्राहकातिरिक्तग्राह्यमिति यावत्, अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्। अप्रामाण्यं हि ज्ञानग्राहकानुव्यवसायाद्यतिरिक्तेन काचादिदोषजन्यत्वज्ञानेन गृह्यते। तद्दृष्टान्तेन ज्ञानप्रामाण्येपि अनुव्यवसायाद्यतिरिक्तेन भूयोवयवसन्निकर्षादिगुणजन्यज्ञानेन ग्राह्यत्वं साध्यते। एवं यथार्थज्ञानसाधनत्वरूपं करणनिष्ठं प्रामाण्यं परत उत्पद्यते, ज्ञानकारणातिरिक्तकारणजन्यमिति यावत्, करणधर्मत्वात् अयथार्थज्ञानसाधनत्वरूपाप्रामाण्यवत्। अत्र अयथार्थज्ञानसाधनत्वं हि चक्षुरादिप्रत्यक्षानुमानागमादिकारणातिरिक्तकारणेन काचादिबाधितत्वानभ्यासादि दोषेण जायते। तद्दृष्टान्तेन यथार्थज्ञानसाधनत्वेपि उक्तज्ञानसाधनकरणातिरिक्तेन भ्रमप्रमादादिराहित्यरूपेणाप्त्यादिना कारणेन जन्यत्वं साध्यते। एवं करणप्रामाण्यं परतो ज्ञायते, ज्ञानसाधनग्राहकातिरिक्तग्राह्यमिति यावत्, करणधर्मत्वात् अयथार्थज्ञानसाधनत्ववदिति साधनीयम्। तथाच - वेदस्यानादिनित्यत्वे कथं प्रामाण्यसिद्धिः, आप्तोक्तत्वादिगुणासम्भवात् - इति चेदत्रोच्यते -

प्रामाण्यस्य गुणजन्यत्वं हि अनन्यथासिद्धान्वयव्यतिरेकानुविधानगम्यं नत्वन्वयव्यतिरेकमात्रगम्यम्। अन्यथा कुलालपित्रादिजन्यत्वं घटस्यापि स्यात्। यद्यपि गुणे सति प्रामाण्यं तदभावे तदभाव इत्यस्ति। तथापि गुणे सति दोषाभावः तदभावे तदभाव

इति दर्शनेन शब्दगुणस्य दोषाभावं प्रत्येव हेतुत्वं न प्रामाण्यं प्रत्यपि। गौरवात्। न च दोषोऽपि गुणाभावसम्पादकतया अन्यथासिद्धमिति नाप्रामाण्ये हेतुरिति वाच्यम्। तत्र विनिगमनाभावेन दोषस्योभयहेतुत्वेपीह गुणस्योभयहेतुत्वानुपपत्तेः। गुणाभावे प्रामाण्याभाव इत्यस्य प्रतारकवाक्यजन्ये याद्दच्छिकसंवादिनि यथार्थज्ञाने गुणाभावेपि प्रामाण्यदर्शनेन असिद्धेः। 'विमतं ज्ञानप्रामाण्यं ज्ञानकारणमात्रजन्यम् अप्रामाण्यातिरिक्तज्ञानधर्मत्वात् ज्ञानत्ववत्' इत्यादिनोक्तानुमानानि बाधितानि। तस्मात् ज्ञानप्रामाण्यं करणप्रामाण्यं च स्वत एवोत्पद्यते।

## उपमानार्थापत्त्यादीनामनुमानेऽन्तर्भावः

सा गौः गवयसद्दशीति प्रमितेः, अयमसौ गवयशब्दवाच्य इति प्रमितेर्वा साधनं गोसादृश्यविशिष्टपिण्डज्ञानमुपमानमित्युच्यते। तथा "पीनो देवदत्तो दिवा न भुङ्क्ते" इति श्रुतवतो रात्रिभोजनप्रमितिर्जायते। तत्साधनं च रात्रिभोजनं विनाऽनुपपद्यमानस्य पीनत्वस्य दर्शनरूपार्थापत्तिरेव। तथा 'शतमस्ति' इति श्रुतवतः पञ्चाशतः प्रमितिरस्ति। तत्साधनं च शतवत्वज्ञानं सम्भवाख्यम्। एवम् अत्र गृहे देवदत्तोस्तीति श्रुतवतः देवदत्त यज्ञदत्तरूपव्यक्तिद्वयमात्रयुक्तं गृहं प्रविष्टस्य नायं देवदत्त इत्याप्तवाक्यादेकव्यक्तौ देवदत्तत्वाभावं जानतः अयं यज्ञदत्त इति व्यक्त्यन्तरे प्रमितिरस्ति। तत्साधनं च परिशेषाख्यं व्यक्त्यन्तरे देवदत्त-

त्वाभावज्ञानमेव। एवं 'भूतले घटो नास्ति' इति घटाभावप्रतीतिरस्ति तत्साधनं च अभावाख्या घटानुपलब्धिरेव। तदेवमुपमानार्थापत्तिसम्भवपरिशेषाभावाख्यानि पञ्च प्रमाणान्यतिरिक्तानि सन्ति। तत्कथं त्रीण्येव प्रमाणानीति।

अत्रोच्यते - सा गौः गवयसदृशी गवयनिष्ठसादृश्यप्रतियोगित्वात्, "यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः यथा यमो यमान्तरेण" इत्यनुमानेन, 'अयं गोसदृशः पिण्डः गवयशब्दवाच्यो भवति तथाऽऽप्तोक्तत्वात्' इत्याद्यनुमानेन धीसम्भवात् नोपमानं पृथक् प्रमाणम्। एवमसौ रात्रौ भुङ्क्ते, दिवा अभुञ्जानत्वे सति पीनत्वात्, अयं पञ्चाशद्वान्, तदधिकसङ्ख्याकवत्त्वात्, अयं देवदत्तो भवितुमर्हति द्वयवत्येव गृहे अन्यस्य देवदत्तत्वनिषेधात्। देवदत्तयज्ञदत्तमात्राश्रयत्वेन प्रमितं वा गृहं देवदत्तवत् अदेवदत्तत्वेन ज्ञातान्यवत्वादित्याद्यनुमानैरेव तत्र धीसम्भवेन द्वितीयं तृतीयं चतुर्थं च नानुमानात् पृथक्प्रमाणम्। अभावस्तु स्फीतालोकादौ विमर्शादिनैरपेक्ष्येण यदा झटिति प्रतीयते तदा चक्षुराद्येव तत्साधनम्। यदा त्वन्धकारे करप्रसारणादिविमर्शपूर्वकं प्रतीयते तदा अत्र घटो नास्ति योग्यत्वे सति अनुपलभ्यमानत्वात् इत्याद्यनुमानमेव तत्साधनमिति पञ्चममपि कदाचित्प्रत्यक्षे कदाचिदनुमाने अन्तर्भवतीति न प्रमाणत्रित्वभङ्गः।

तदेवम् -

अनुप्रमाणं त्रिविधं मध्वसिद्धान्तरीतितः ।
प्रतिपक्षनिरासेन प्रोक्तं सूरिमनोरमम् ।
प्रसक्तानुप्रसक्त्यैवं सप्रपञ्चं समानकम् ।
बुद्धिर्निरूपिता सेयं हृदये ध्रियतां बुधैः ।

## सुखविवेकः

अनुकूलतया वेदनीयं सुखम्। तद्विविधम्। स्वरूपं बाह्यं चेति। तत्र स्वरूपमनादिनित्यम्। आवरणेन भावरूपाज्ञानेन इदानीमनभिव्यक्तमपि श्रीहरिचरणाराधनादिसमुत्पन्नयोगप्रभावेन आमुक्तेः क्रमेण वर्धमानम्, मुक्तौ त्वेकप्रकारमेव। तत्रापि तत्तद्योग्यतातारतम्यानुसारेण तरतमभावोपेतम्। तत्रापि सात्विकजीवानां देवर्षिपितृपनरभेदेन पञ्चविधानामेव स्वरूपं सुखम्। न त्वन्येषाम्। बाह्यं तु विषयानुभवनिमित्तकमन्तःकरणोपादानकं सादि विनाशचरं च। अन्तःकरणानुसृत्यानुवर्तते। मुक्तौ तु नानुवर्तते। अन्तःकरणाभावात्। इदं तु जीवमात्रसाधारणम्। [1]परन्तु तमोयोग्यानामैहिकमेव। पारलौकिकं तु सुखं नास्त्येव ॥

"विष्णुभक्तिविहीनस्य गङ्गायां मरणं यदि ।
ऐहिकं सुखमापन्नो ह्यन्धे तमसि मज्जति ॥" इत्यादिवचनात्।

उभयविधं सुखं साक्षिग्राह्यम्। न तु मनोग्राह्यम्। उपरतेऽपि

1 तद्विविधम्। ऐहिकमामुष्मिकं चेति। तत्राद्यं त्रयाणामपि। द्वितीयं तु द्वयोरेव। न तामसानाम् – क.

मनसि सुषुप्तौ सुखानुभवात्। न चात्र विवादः। 'एतावन्तं कालं सुखमहमस्वाप्सम्' इत्यौत्तरीयकस्मृतेः॥ **इति सुखविवेकः॥**

## दुःखविवेकः

प्रतिकूलतया वेदनीयं दुःखम्। तद्विविधम्। स्वरूपं बाह्यं चेति। स्वरूपमनादिनित्यम्। तत्त्विदानीं विष्णुवैष्णवविरोधचरणानुसारेण क्रमेणामुक्तेरभिव्यज्यमानमावरणशक्त्याऽयावदभिव्यज्यते। निवृत्ते त्वावरणे यावदभिव्यज्यते[1]। तदपि नैकप्रकारम्। किन्तु तत्तद्योग्यतानुसारेण तारतम्योपेतम्। एतच्च तमोयोग्यानामेव न त्वन्येषाम्। द्वितीयं तु विषयानुभवनिमित्तकमन्तःकरणोपादानं त्रिविधजीवसाधारणं संसारदशायामेव वर्तते। निवृत्ते त्वन्तःकरणे मुक्तौ तमसि च निवर्तते॥ **इति दुःखविवेकः॥**

## इच्छाविवेकः

ज्ञानजन्यः प्रयत्नजनको धर्मविशेषः इच्छा। साऽपि स्वरूप -बाह्यभेदेन द्विविधा। [2]तत्राद्याऽनादिनित्या। त्रिविधजीवसाधारणी। संसारे अनभिव्यक्तौ सत्यपि साधनानुष्ठानमहिम्ना क्रमेणा-

1 द्वे नित्यमुक्ती इत्यादिश्रुतेस्तामसानामपि तमः प्राप्तिलक्षणामुक्तिरस्त्येव। - क.

2 ननु प्रजहाति यदा कामान् सर्वान् पार्थ - इत्यादेः स्वरूपेच्छैव नास्तीति चेन्न। तत्रैव मनोगताननिति विशेषणात्। तद्वैविध्यप्रतीतेः। - क.पाठः।

भिव्यज्यते। मुक्तौ तु एकप्रकाराऽवतिष्ठते। साऽपि योग्यता तारतम्यात् तारतम्योपेता। मुक्तौ इच्छामात्रस्य विनाश इति मायावादी स मन्दः। "कामा येऽस्य हृदि स्थिताः" इत्यादि-वचनेष्वन्तःकरणपरिणामरूपाया नाशावगमेपि स्वरूपभूताया-स्तदभावात्। 'सः यदि पितृलोककामो भवति' इत्यादिना मुक्तावपि तत्सद्भावावगमात्। द्वितीया तु इष्टसाधनत्वज्ञानजन्या-न्तःकरणपरिणामरूपा सादिरनित्या। त्रिविधजीवसाधारणी। तदनुवृत्तिपर्यन्तमनुवर्तते। तन्निवृत्तौ मोक्षे निवर्तते च॥**इति इच्छाविवेकः॥**

## द्वेषविवेकः

अनिष्टत्व-तत्साधनत्वज्ञाननिमित्तकः प्रयत्नजनको धर्मविशेषो द्वेषः। सोऽपि स्वरूपबाह्यभेदेन द्विविधः। शिष्टं पूर्ववत्॥ **इति द्वेषविवेकः॥**

## प्रयत्नविवेकः

प्रयत्नः कृतिः। कृतिप्रयत्नादिशब्दाभिधेयः। करोमीत्याद्य-नुभवसिद्धः। शिष्टं पूर्ववत्॥**इति प्रयत्नविवेकः॥**

## धर्माधर्मविवेकः

विहितक्रियाजन्यो धर्मः। निषिद्धक्रियाजन्योऽधर्मः। सदपूर्वं, दुरितापूर्वं, पुण्यं, पापं, सुकृतं, दुष्कृतमित्यादिशब्दवाच्यौ।

तदुभयं बाह्यमेव न स्वरूपम्। तयोः कर्मादिनिमित्तत्वात्॥ **इति धर्माधर्मविवेकः ॥**

## संस्कारविवेकः

संस्कारस्त्रिविधः। वेगः स्थितिस्थापको भावना चेति। तत्राद्यो मनोवाय्वादिषु वर्तते। द्वितीयस्तु कटादौ। भावना तु वासनैव। सा च मनोविवेके सप्रमाणं निरूपिता। बुद्ध्यादिसंस्कारान्तानां गुणानां मनोविकाराणामपि विक्लित्तिरूपपचनक्रियायाः तण्डुलविकारत्वेऽपि देवदत्ताश्रितत्ववत् चेतनाश्रितत्वमवगन्तव्यम्। न तु परेषामिव आत्मविकारत्वम्। आत्मनः क्वापि विकारादर्शनात्। अत एवाहं जानामि सुखी दुःखीत्यादिप्रत्ययानुपपत्तिरिति निरस्तम्। अन्यविकारस्यापि अन्यनिष्ठत्वस्य बहुळमुपलम्भाभावात्। यावता मृद्विकारो घटो भूतळाश्रितोऽनुभूयते - **इति संस्कारविवेकः ॥**

## सङ्ख्याविवेकः

एकत्वादिव्यवहारहेतुः सङ्ख्या। सा च एकत्वद्वित्वत्रित्वादिभेदेन बहुविधा। एकत्वं धर्मिणात्यन्ताभिन्नम्। द्वित्वत्रित्वादिकं तु धर्मिणा भिन्नाभिन्नं व्यासज्यवृत्ति। न चानुगतधर्मनिषेधविरोधः। द्वित्वावच्छिन्नस्यैकस्यैव द्वित्वधर्मित्वाङ्गीकारेणानेकधर्म्यननुगतत्वा -भावात्। घटत्वादीनां तु घटादयः प्रातिस्विकरूपेणैव धर्मिण इति व्यासज्यवृत्तित्वाभावः। सा च एकत्वादिपरार्धपर्यन्तैवेति

केचिदाहुः। तन्न। 'परमः परार्ध्यः' इत्यादिना ततोऽपि सङ्ख्या-दर्शनात्। भागभागार्धभेदेन एकत्वसङ्ख्यापेक्षयाप्यपकृष्टसङ्ख्याया दर्शनात् न क्वचिदपि सङ्ख्या विश्रान्तेति नैवं व्यवस्था युक्ता। तद्व्यवहाराभावस्तु प्रयोजनाभावादेव।

## परिमाणविवेकः

मानव्यवहारासाधारणकारणं परिमाणम्। तद्विविधम्। अणु-परिमाणं महत्परिमाणं चेति। ह्रस्वदीर्घपरिमाणमत्रैवान्तर्गतम्। अणुत्वं महत्त्वं च न क्वचिद्विश्रान्तम्। किन्त्वनन्तमेवेत्यात्मविवेके निरूपितम्॥ इति **परिमाणविवेकः॥**

## पृथक्त्वादीनां पदार्थान्तरत्वनिषेधः

अत्र पृथक्त्वव्यवहारासाधारणकारणं पृथक्त्वम्, विभक्तत्व-व्यवहारासाधारणकारणं विभाग इति पृथक्त्वविभागयोः पदार्था-न्तरत्वमुपेत्य गुणकाण्डे निवेशमिच्छन्तो वादिनोऽपि न सूक्ष्म-बुद्धयः। यतः पृथक्त्वं विभागः भेदः अन्योन्याभावश्चेति पर्यायाः। न च पर्यायाणामर्थभेदोऽस्ति।

ननु तथापि द्रव्याद्यष्टपदार्थेषु भेदो न सङ्गृहीत इति तत्पर्यायः पृथक्त्वादिः सुतरां न सङ्गृहीत इति भेदादेः पदार्थत्वमेव न स्यादिति चेन्न। द्रव्याद्यष्टपदार्थेष्वेवान्तर्भावात्। तथाहि – भेदो हि धर्मिस्वरूपम्। धर्मिणा अत्यन्तामभिन्नो द्रव्याद्यभावान्तेषु सर्वेषु पदार्थेषु प्रतीयमानो द्रव्याद्यात्मक एव। धर्मिणि ज्ञातेऽपि

भेदाज्ञानम्, सप्रतियोगिकत्वं[1] चेत्यादि भेदकार्यं तु विशेषबलादेव युज्यते। अतो न पदार्थान्तरम्। ननु गुणकर्मादीनां द्रव्यस्वरूपत्वेऽपि भेदप्रतिनिधिविशेषबलात् पदार्थान्तरत्वमङ्गीकृत्य पृथग्गणनमिव भेदस्यापि पदार्थान्तरत्वादि किं न स्यादिति चेन्न। गुणादीनां भेदाभेदयोः सद्भावात्। भेदे तदभावात्। न हि भेदः क्वचिदपि धर्मिणा भिन्नाभिन्नोस्ति। 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति'[2] इति मतस्य अन्यत्र दूषितत्वात्, खण्डिते भेद ऐक्यं चेति न्यायाविषयत्वात्। तेन तत्पर्यायाणां पृथक्त्वादीनां न पदार्थान्तरत्वम्। न च गुणकाण्डे परिगणनम्।

**संयोगविवेकः**

संयुक्तव्यवहारहेतुः संयोगः। स द्विविधः। जन्योऽजन्यश्चेति। तत्राद्यः त्रिविधः। उभयकर्मजः अन्यतरकर्मजः संयोगजश्चेति। तत्राद्यो मेषयोः संयोगः। द्वितीयस्तु स्थाणुश्येनयोः। तृतीयः हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः। यद्यपि अवयवावयविनोर्भेदः। तथापि अत्यन्ताभेदाभावात् तृतीयप्रकारोऽपि घटते। अजन्यसंयोगो यथा ईश्वराकाशयोः संयोगः। अजसंयोग एव नास्तीत्येतत्तु नादरणीयम्। ईश्वराकाशसंयोगस्यापि न्यायप्राप्तत्वात् ॥ इति **संयोगविवेकः** ॥

---

1 धर्मिणो निष्प्रतियोगिकत्वेऽपि भेदस्य सप्रतियोगिकत्वं तु – इत्याशयः

2 तैत्तिरीयोपनिषद्भाष्ये

## परत्वादिगुणविवेकः

परत्वापरत्वव्यवहारकारणे परत्वापरत्वे। पतनकारणं गुरुत्वम्। स्यन्दनकारणं द्रवत्वम्। हस्तादौ संसर्गविशेषहेतुः संश्लेषः स्नेहः। माहात्म्यज्ञानपूर्वकप्रेमा भक्तिः। व्यावृत्तिः विरक्तिः। क्रोधासमुत्थितिः शमः। निग्रहो दमः। अवष्टम्भक-शक्तिः ओजः। सहिष्णुताप्रयोजको धर्मविशेषो बलम्। दैहिको-दार्ढ्यविशेषो वाऽयम्। अनपगमनं स्थैर्यम्। शोभा प्रकाशविशेषो वा कान्तिः। एवमन्येपि गुणा व्याख्येयाः।

इति पदार्थविवेके गुणपरिच्छेदः॥

## कर्मविवेकः

संयोगविभागासाधारणकारणं कर्म। तत् पञ्चविधम्। उत्क्षे-पण-अपक्षेपण-आकुञ्चन-प्रसारण-गमनभेदात्। तानि द्विविधानि। नित्यानित्यभेदात्। तत्र नित्यानि ईश्वरमुक्तयोः। यद्यपि सृष्टिस्थिति- संहारादीनि कर्माणि नित्यानि ईश्वरे सन्ति। तथापि यथायथम् उत्क्षेपणादिकर्मस्वेवान्तर्भवन्ति। नन्वेवम् ईश्वरीय-कर्मणां सृष्ट्यादिरूपाणां नित्यत्वे इदानीमपि प्रतिपत्तिः स्यात्। अस्राक्षीत्, सृजति, स्रक्ष्यतीत्यादिव्यवहारश्च न स्यादिति चेत् सत्यम्। सृष्ट्यादिक्रिया शक्त्यात्मना नित्यापि व्यक्त्यात्मना कदाचित् प्रतीयते। यथा मृत्पिण्डः कारणात्मना प्राक् सन्नपि कार्यात्मना कदाचिदेव प्रतीयते। तद्वदेव अस्राक्षीदित्यादिव्यवहारो

भवति। न ह्यन्धकारस्थघटादीनां प्रागपि सतां प्रदीपारोपणानन्तरमेवाभिव्यज्यमानानामभिव्यक्तेः तात्कालिकत्वमात्रेण तात्कालिकत्वं भवति। यद्यपि शक्त्यात्मना नित्यायाः क्रियायाः तत्स्वरूपत्वात् व्यक्तिरपि नित्यैव। तथापि भेदप्रतिनिधिना विशेषेण तात्कालिकत्वव्यवहारो भविष्यति। यथोक्तमधस्तात् भूतविवेके। प्रपञ्चितं चैतत् आकर एव अत्ताचराचरेत्यधिकरणे।

अनित्यं कर्म संसारिणां जडानां च यावद्रव्यभाव्ययावद्रव्यभावि चेति द्विविधम्। आद्यं धर्मिणाऽत्यन्ताभिन्नम्। यथा वाय्वादीनाम्। द्वितीयं तु भिन्नाभिन्नम् । यथा वृक्षादीनाम्॥ इति **कर्मविवेकः**॥

## सामान्यविवेकः

व्यावर्तको धर्मः सामान्यम्।[1] तद्द्विविधम्। नित्यमनित्यं चेति। नित्यगतं नित्यं यथा ईश्वरत्व-जीवत्व-आकाशत्वादिः। अनित्यगतमनित्यम्। तद्द्विविधम्। यावद्द्रव्यभाव्ययावद्द्रव्यभावि चेति। आद्यं यथा घटत्वपटत्वादिः। द्वितीयं यथा ब्राह्मणत्व-क्षत्रियत्वादिः। सुरापानादिना ब्राह्मणत्वस्य व्यक्तौ सत्यामेव विनाशात्। तपोविशेषेण विश्वामित्रस्य क्षत्रियत्वविनाशात्। पुनर्द्विविधम्। अखण्डोपाधिः सखण्डोपाधिश्चेति। आद्यो यथा

1 नित्यमेकमनेकानुगतं सामान्यम् इत्यन्यः। तन्न। सुरापानादिना ब्राह्मणत्वादिजातेर्विनाशदर्शनात्। एकघटस्य विनाशे जातेरपि तद्गतायाः विनाशावश्यम्भावाच्च। – कपाठः.

घटत्वपटत्वादिः। अयमेव जातिरित्युच्यते। द्वितीयो यथा कम्बुग्रीवादिमत्त्व-पाचकत्व-पूजकत्वादिः। स पुनस्त्रिविधः। विशेषोपलक्षणोपाधिभेदात्। तत्र विशेषणम् - यथा नीलोत्पल-मित्यादौ नीलत्वादिः। उपलक्षणं यथा - काकवद् देवदत्तगृह-मित्यादौ काकादिः उपाधिर्यथा पाचको देवदत्त इत्यादौ पाका-दिः। एवं लक्षणानि शास्त्रे द्रष्टव्यानि। एतेन नित्यमेकमनेकानुगतं सामान्यमित्येतन्निरस्तम्। उक्तानित्यसामान्ये अव्याप्तेः। अनुगत -धर्मस्य दूषितत्वाच्च॥ इति **सामान्यविवेकः**॥

## विशेषविवेकः

भेदरहितवस्तुविषयकानुपचरितभेदव्यवहारनिमित्तत्वं[१] विशेषस्य लक्षणम्। इदञ्च शुक्लपटनिष्ठविशेषे वर्तते। तथाहि – शुक्लः पटः - इति गुणगुण्यभेदव्यवहारो भेदरहितवस्तुविषयकः। गुणगुणिनोः भेदाभावात्। अन्यथा गुणगुण्यादिप्रतीतेः कुण्डे बदराणीति आश्रयाश्रयिभावविषयकप्रतीतितः, अङ्गुलिद्वयप्रतीति-तश्च वैलक्षण्याभावप्रसङ्गः। प्रतीतिवैलक्षण्यं हि विषयवैलक्षण्य-नियतम्। न तावदनयोरयुतसिद्धयुतसिद्धविषयत्वाभ्यां वैलक्ष-ण्यम्। अयुतसिद्धत्वमाश्रयाश्रयिभावनियमो नान्यत्। तथाच – अयुतसिद्धविषयत्वेऽपि आश्रयाश्रयिभावविषयकत्वसम्भवेन

---

1 लक्षणेऽस्मिन् अनुपचरितत्वविशेषणसार्थक्यं चिन्त्यम्।

तस्य तत्राप्रयोजकत्वम्। अयुतसिद्धविषयत्वेपि पटस्याधिकरणत्वं शौक्ल्यस्य आधेयत्वं च प्रत्येतुं शक्यत इति तत्र तदप्रतीतौ तयोरभेद एव निमित्तं वाच्यम्। तस्मादनयोर्विषयवैलक्षण्यसिद्ध्यर्थं पटशौक्ल्ययोर्भेदाभावः कुण्डबदरयोर्भेदश्चाङ्गीकार्यः। एवं राहोः शिरः, घटस्य स्वरूपम्, गजादिः सेना, पत्रं ताटङ्कम्, अयं घटः इत्यादिप्रतीतिविषयाणां राह्वादीनां शिर आदिभिर्भेदाभावः सिद्धः। तथाचैवमयुतसिद्धादेर्भेदाभावेपि भेदकार्याणि - गुणिनि ज्ञाते गुणस्याज्ञानं, गुणिनो झटिति ज्ञानं, गुणस्यान्धकारादौ दीपारोपणादिना विलम्बेन ज्ञानम्, निष्प्रतियोगिकत्वसप्रतियोगिकत्वमित्यादीनि दृश्यन्ते। न चैतद् दर्शनं भ्रान्तिः। बाधाभावात्। तथाच शुक्लः पटः इति भेदव्यवहारः केनचिन्नियतः भेदव्यवहारत्वात् भूतले घट इति व्यवहारवदिति सामान्यतः किञ्चिन्निमित्तं सिद्धम्। तच्च निमित्तमिह भूतलघटयोरिव न भेदः। उक्तरीत्या गुणगुण्यादेः अबाधिताभेदप्रत्यक्षेण भेदस्य बाधितत्वात्। तथा चैवं भेदरहितगुणगुण्यादिवस्तुविषयकभेदव्यवहारो विशेषेणैव निरूह्य इति लक्ष्ये लक्षणसमन्वयः।

(१)(सोऽयं देवदत्त इति भेदव्यवहारः विशेष्यस्यैकत्वेपि देशकालादिविशिष्टसद्भावेन विशिष्टभेदो लक्ष्यत इति भेदव्यवहारनिर्वाहकत्वं लक्षणाद्यमुख्यवृत्तावतिव्याप्तमिति तद्वारणाय अनुप-

1 () चिह्नान्तर्गतो भागः प्रक्षिप्त इति भाति।

चरितत्व इति भेदव्यवहारविशेषणम् ।) भेदव्यवहारनिमित्तत्वमात्रे कृते भूतले घटः इत्यादिभेदव्यवहारनिमित्ते भेदे अतिव्याप्तिः स्यात् । तदर्थं भेदरहितवस्तुविषयकेति भेदव्यवहारविशेषणम् । भूतले घटोऽस्तीति भेदव्यवहारस्य भेदवद्भूतलघटवस्तुविषयकत्वात् नातिव्याप्तिः । नचैवंविधविशेषेणैव सर्वत्र भेदकार्यनिर्वाहोपपत्तौ भेदः दत्तजलाञ्जलिः स्यादिति वाच्यम् । विशेषस्य भेदप्रतिनिधित्वात् । निध्यसम्भवे हि प्रतिनिधिरुपादीयते । न तु प्रतिनिधिना निधिस्त्यज्यते । पूतिकेन प्रतिनिधिना सोमत्यागादर्शनात् । तस्मात् भेदहीनेपि अपर्यायशब्दानां सहप्रयोगादिभेदकार्यनिर्वाहकः विशेषः वस्तुसामर्थ्यापरपर्यायः सर्ववस्तुषु सर्ववादिभिरङ्गीकार्यः । तदुक्तम्–

भेदहीने त्वपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥ इति ।

अङ्गीकृतो विशेषः धर्मिणाऽत्यन्ताभिन्नः । न तु रूपादिवत् भिन्नाभिन्नः । चूतफलादौ सत्येव तद्गतश्यामरूपादेरिव धर्मिणि घटादौ सत्येव वस्तुसामर्थ्यापरपर्यायस्य विशेषस्य निवृत्यदर्शनात् । ततश्चायं विशेषः भेद-पृथत्त्व-विभाग-अन्योन्याभावादिवत् न पदार्थान्तरम् । अत एव न पृथक् परिगणनीयः । अत एव धर्मिणाऽत्यन्ताभिन्नभेदादीनां न पदार्थान्तरतादि । अत एव च –

**कार्यकारणयोश्चैव तथैव गुणतद्वतोः ।**
**क्रियाक्रियावतोश्चैव तथा जातिविशेषयोः ।**
**विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि[१] ॥**

इत्यादिना भेदाभेदस्थलपरिगणनावसरे विशेषविशेषिणोः भेदभेदिनोश्च परिगणनाभावः । तस्माद् यथा भेदो न पदार्थान्तरमिति न पृथक् परिगणितः तथैवायं विशेषोऽपीति ।

सत्यमेतत् । तार्किकाभिमतनित्यद्रव्यमात्रवृत्तिविशेषात् व्यावृत्तिसिद्धये सर्ववस्तुगतं वस्तुसामर्थ्यापरपर्यायं द्रव्याद्यभावान्तपदार्थस्वरूपं विशेषाख्यमपूर्वपदार्थान्तरं साधयितुमेव पृथङ्-निर्देशः । भेदस्य तु[२] वाद्यन्तरोक्तरीतिरेव अस्माकमभिमता । न पुनः तत्र रीत्यन्तरमस्तीति वैषम्यम् ॥ **इति विशेषविवेकः ॥**[3]

---

1 तत्वविवेके

2 सिद्धान्त्यभिमतविशेषाख्यपदार्थः नैयायिकाभिमताद्विशेषाद् सर्वथा विलक्षणः । भेदविषये न तथा सर्वथा वैलक्षण्यमित्याशय इति भाति ।

3 भेदप्रतिनिधिर्भेदकार्यकारी वस्तुसामर्थ्यं विशेषः । सोऽयं सर्वेष्वपि पदार्थेषु सर्ववादिभिः अङ्गीकरणीयः । कथमन्यथा 'घटस्य स्वरूपं' 'राहोः शिरः' 'मम चैतन्यं' 'ब्रह्मणः आनन्दः' इत्यादिव्यवहारः । नहि घटादीनां स्वरूपादिभ्याद् भेदः । केनचित् वादिना स्वीकृतः । न च विशेषणविशेषिणोर्भेदे अनवस्थानात् । ऐक्यस्याङ्गीकार्यत्वे घटस्य विशेष इत्यादि व्यवहारः । कथमिति वाच्यम् । सामान्यसमवायोरिव स्वनिर्वाहकत्वाङ्गीकारात् । विस्तरस्तु भूतविवेके द्रष्टव्यः ॥

## विशिष्टांश्युभयविवेकः

विशिष्टव्यवहारविषयो विशिष्टम्। तच्च विशेषणविशेष्य-सम्बन्धात्मकमेवेत्यन्ये। तन्न। दण्डपुरुषतत्सम्बन्धा इति समूहालम्बनाद् दण्डीतिविशिष्टप्रत्ययस्य भेदाभावप्रसङ्गात्। किन्तु तदतिरिक्तमेव। प्रमाणं चात्र दण्डीति विशिष्टव्यवहारः दण्डदेवदत्ततत्सम्बन्धातिरिक्तविषयकव्यवहर्तृसमवेतविशिष्टज्ञान-जन्यः विशिष्टव्यवहारत्वात्, कुण्डलीति व्यवहारवत्। अनतिरि-क्तत्ववादिनां मतेऽपि कुणडलीति व्यवहारस्य कुण्डलदेवदत्ततत्स-म्बन्धात्मकविशिष्टविषयकज्ञानजन्यत्वेऽपि दण्डदेवदत्ततत्सम्बन्धा -तिरिक्तविषयकविशिष्टज्ञानजन्यत्वमस्ति। न हि कुण्डलीति विशिष्टज्ञानं दण्ड-देवदत्त-तत्सम्बन्धात्मकविशिष्टविषयकं भवती-ति न दृष्टान्तः साध्यविकलः। दण्ड-पुरुष- तत्सम्बन्धादिसमूहा-लम्बनं दण्डविशिष्टज्ञानविषयातिरिक्तविषयकं दण्डविशिष्टव्यव-हाराजनकत्वात् कुण्डलीति ज्ञानवत् इत्याद्यनुमानम्। तद्विविधम्। नित्यमनित्यं चेति। विशेषणविशेष्ययोः नित्यत्वं यत्र तत्राद्यम्। यथा ईश्वरः सर्वज्ञः, जीवश्चेतन इत्यादौ। द्वितीयं यथा - दण्डी देवदत्त इत्यादौ। अत्र हि दण्ड-देवदत्त-तत्सम्बन्धेभ्यः उत्पन्नं विनश्वरञ्च विशिष्टं गृह्यते।

---

नित्यद्रव्यवृत्तयो विशेषास्तु अनन्ता इति वदन् नवमीक्ष्य वादी। अनित्य-पदार्थेष्वपि न्यायसाम्येनाङ्गीकार्यत्वात्॥ इति विशेषविवेकः॥ (खपाठः)

ननु भावकार्यत्वविशिष्टस्य किमुपादानं किञ्च निमित्तमिति चेत् विशेषणमेवोपादाननिमित्तमिति तावद् ब्रूमः। ननु एकस्यानारम्भकत्वमिति न्यायात् विशेषणमेकमेव कथमुपादानमिति चेन्न। एकस्यैव घटस्य स्वगतरूपं प्रति उपादानत्वदर्शनात्। एकस्य द्रव्यारम्भकत्वं न दृष्टमिति चेत्। किं तावता। इहाप्येकेन विशेषणेनारभ्यमाणं विशिष्टं न द्रव्यम्। पदार्थान्तरत्वाङ्गीकारात्। निमित्तकारणं तु विशेष्यसन्निधानं तत्संयोगश्च। नन्वेवं यत्र विशेषणे सत्येव विशेष्यं विनश्यतीति वृक्षविशिष्टविहगस्य विनाशः कथम्। उपादानस्य वृक्षस्य विनाशाभावात्। अपेक्षाबुद्धिनाशाद् द्वित्वस्येव विशेष्यसान्निध्यादिनिमित्तकारणनाशात् तन्नाशोपपत्तेः। विशेषणविशेष्यमुभयमप्युपादानमिति वाऽस्तु। नन्वेवं दण्डी कुण्डली देवदत्तः इत्यादौ प्रतीतविशिष्टद्वयस्यानुपपत्तिः। तथाहि – दण्डविशिष्टस्य कुण्डलविशिष्टस्य च विशेष्यमेकमेव। तद्यदा दण्डविशिष्टात्मना परिणमते न तदैव कुण्डलविशिष्टात्मना परिणामार्हम्। न वा उत्पन्नं विशिष्टद्वयं युगपदेव एकत्रावस्थानार्हम्। मैवम्। एकस्यैव घटस्य युगपत् रूपात्मना रसात्मना च परिणामदर्शनात्। कालाकाशयोश्च युगपदेकत्रावस्थानदर्शनाच्च। मूर्तद्रव्ययोरेवं न दृश्यत इति चेत्। अत एव हि अमूर्तत्वं द्रव्याद्यनन्तर्भावश्च। तथाहि 'रूपी घटः' इत्यादौ प्रतीयमानं रूपविशिष्टमुक्तरीत्या रूपलक्षणविशेषणो-

पादेयम्। रूपञ्च गुणः। न च गुणोपादेयं द्रव्यादिष्व- न्तर्भवति। द्रव्यादिपदार्थानां केषाञ्चित् नित्यत्वेनानुपादेयत्वात्। केषाञ्चिद-नित्यत्वेनोपादेयत्वेऽपि गुणोपादेयत्वाभावात्। एवं 'दण्डी देव-दत्तः' इत्यादौ प्रतीयमानं दण्डद्रव्यविशेषणकं पुरुषद्रव्यविशेष्यकं च न दण्डपुरुषयोर्द्रव्ययोरन्तर्भवति। उक्तरीत्या दण्डोपादानक-त्वात्। पुरुषोपादानकत्वाच्च। न हि दण्डो दण्डोपादानको न वा पुरुषः पुरुषोपादानकः। एवं तत्तद्विशेषणविशिष्टसर्वेष्वपि तत्त-द्विशेषणोपादानकत्वादिना तत्तद्विशेषणात्मकत्वाभावः तत्तद्विशे-ष्यात्मकत्वाभावश्चानुमेयः। तथाच प्रयोगः – विमतं विशिष्टं न द्रव्यं नापि गुणादि गुणोपादेयत्वात्, न वा विशेषणविशेष्यात्मकं विशेषणविशेष्योपादेयत्वादित्यादिः। ततश्च क्लृप्तपदार्थसालक्षण्या-भावाद् विशेषणविशेष्योपादानकं विशिष्टद्वयं युगपदेकत्र सहा-वस्थितं भवतीत्युक्ते को दोषः।

## विशिष्टविभागः

तत्पुनः षड्विधम्। द्रव्यविशिष्टं, गुणविशिष्टं, क्रियाविशिष्टं, जातिविशिष्टं, विशेषविशिष्टं, अभावविशिष्टं चेति। तत्राद्यं 'दण्डी देवदत्तः' इत्यादौ। द्वितीयं 'रूपी घटः' इत्यादौ। तृतीयं चलति देवदत्त इत्यादौ। चतुर्थम् 'अयं घटः' इत्यादौ। पञ्चमं 'समर्थो देवदत्तः' इत्यादौ। षष्ठं 'घटभाववद् भूतलम्' इत्यादौ गम्यते।

एवमंशांशितत्सम्बन्धातिरिक्तं अंशांशितत्सम्बन्धा इति समूहालम्बनात् भेदसिद्धये अंशीति प्रतीतिगोचरः पदार्थान्तरमङ्गीकार्यम्। अन्यथा समूहालम्बनात् भेदो न स्यात् । अंशांशिभावो द्रव्येष्वेव न गुणादिष्विति नियमात्। खण्डपटमहापटयोरंशांशिभावप्रतीतौ द्रव्यविशिष्टस्यैव विषयत्वसम्भवेन नांशी पृथक्-पदार्थ इत्यप्याहुः ॥ इति **विशिष्टांश्युभयविवेकः** ॥

## अभावविवेकः

निषेधमुखवेद्योऽभावः[1]। यद्यपि भावोऽपि घटो घटाभावाभाव इति निषेधमुखेन प्रतीयते। तथापि न प्रथमप्रतीतौ तथा वेद्यः। अयं घट इति प्रथमं प्रतीत्यैव हि घटाभावाभाव इति प्रत्येतव्यः। अभावस्तु प्रथममेव निषेधमुखेन प्रतीयते। द्वितीयादिप्रतीतौ तु[2] घटाभावः अस्ति इति विधिरूपेण।

स चायमभावो भावान्न भिद्यते। भूतळादिरूपाधिकरणातिरिक्तस्याभावस्यानुपलम्भात्। अतिरिक्तश्च भवन्नाभावः घटवति भूतळे स्यादुत घटाभाववति। नाद्यः। विरोधात्। न द्वितीयः।

---

1 यश्च प्रथमोपलब्धौ नास्तीति प्रतीयते सोऽभावः। – तत्वोद्योतटीका

2 स्वरूपेण हि भावाभावौ विधिनिषेधात्मनौ। रूपान्तरेण तु निषेधविधिरूपौ। तत्रापाताजायां संविदिस्वरूपमेव भासते। द्वितीयादिप्रतीतौ रूपान्तरम्। कार्यगम्यत्वात् सामग्रीभेदस्य। तथाच प्रतीतिः अस्त्यत्र घटः स न शुक्ल इति। एवम् नास्त्यत्र घटः अस्ति घटाभाव इति – तत्वसङ्ख्यानटीका

अधिकरणातिरिक्ताभावो नास्तीति वदन्तं प्रति घटाभाववतीति वक्तुमयोगात्। घटाभावे घटाभावापत्त्याऽत्माश्रयाच्च। तस्मादधिकरणस्वरूपमेवाभाव इति केचित्।

तन्न। भावाभावप्रतीत्योर्विषयवैलक्षण्यमन्तरा भेदासिद्धेः तन्निर्वाहाय भावातिरिक्तस्याभावस्याङ्गीकार्यत्वात्। 'भूतळे घटो नास्ति' इति भूतळस्याधिकरणत्वेनाधेयत्वेन चाभावस्य प्रतीतेश्च। न हि स्वयमेव स्वस्याधिकरणमाधेयं च भवति। घटाभावः क्व वर्तते इति प्रश्नस्य च घटाभाववति भूतळ इत्युत्तरम्। न चात्माश्रयः। घटाभावोपलक्षिते भूतळे घटाभाव इत्युक्ते तदभावात्। अन्यथा प्रागभावावच्छिन्नसमयवृत्तित्वं पूर्ववृत्तित्वमिति प्रागभावस्योक्तरीत्या प्रागभावावच्छिन्नसमयवृत्तित्वापत्त्या[१] पूर्ववृत्तित्वाभावेन प्रागभावे घटादिकारणता न स्यात्। घटप्रसक्तिमति भूतळे घटाभाव इत्युक्तौ उक्तदोषाभावाच्च। अन्यथा अभावप्रतिषेधोप्येवं न स्यात्।

## अभावविभागः

स चाभावः त्रिविधः। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति। उत्तरैकावधिरभावः **प्रागभावः**। स हि प्रतियोग्युत्पत्तेः प्रागेवा -

1 प्रागभावस्य प्रागभावावच्छिन्नसमयवृत्तित्वे आत्माश्रयत्वप्रसङ्गात् घटपूर्ववृत्तित्वं प्रागभावस्य नास्तीति घटाधिकरणता तत्प्रागभावस्य न स्यादित्या- शयः।

स्ति। न तूत्पन्नेऽपि प्रतियोगिनीति कृत्वा उत्तरावधिरेवास्यास्ति। न पूर्वावधिः। अनादित्वात्। पूर्वैकावधिरभावः **प्रध्वंसा- भावः**। स हि प्रतियोगिध्वंसानन्तरमेवास्ति न ततः प्रागिति। अवि- नाशित्वात् नोत्तरावधिरस्तीति कृत्वा पूर्वैकावधिर्भवति। ननु प्रागभावस्य विनश्वरत्वे प्रागभावप्रध्वंसोऽप्यङ्गीकार्यः। तस्य चोक्तरीत्योत्पत्तिमत्त्वे च तस्यापि प्रागभावोऽङ्गीकार्यः, तस्यापि प्रध्वंसः तस्यापि प्रागभाव इति प्रागभावपरम्परा स्यात्। एवं प्रध्वंसस्य उत्पत्तिमत्त्वे तत्प्रागभावोङ्गीकार्यः। तस्यापि नश्वरत्वेन प्रध्वंसोऽङ्गीकार्यः। तस्याप्येवमिति ध्वंसपरम्परा स्यादिति चेन्न। तत्प्रागभावध्वंसयोः[१] प्रतियोगिस्वरूपत्वाङ्गीकारात्।

ननु घटध्वंसो नाम घटप्रागभावनिवृत्तेर्निवृत्तिरिति घटप्राग- भावोन्मज्जनप्रसङ्गः। घटप्रागभावनिवृत्तेर्नित्यत्वेन तस्य निवृत्त्य- योगश्च। मैवम्। प्रतियोगिकाले प्रागभावस्य विरोधेनासत्त्ववत् प्रतियोगिध्वंसकालेऽपि विरोधात् असत्वेन तदुन्मज्जनापादना- सम्भवात्। केवलाभावस्य भावप्रतियोगिकस्य प्रध्वंसस्य निवृत्त्य- भावेऽपि अभावप्रतियोगिकस्य भावात्मकस्य प्रध्वंसस्य निवृत्त्य- ङ्गीकारे बाधकाभावात्। अन्यथा केवलाभावस्य रूपाद्यदर्शनेन प्रागभावप्रध्वंसात्मकस्य घटस्य रूपादिर्न स्यात्।

सदातनाभावोऽ**त्यन्ताभावः**। पूर्वोत्तरोभयावधिरहित इति

1 ध्वंसप्रागभाव-प्रागभावध्वंसयोरित्यर्थः।

यावत्। अत एव अनादिर्नित्यश्च। न ह्यस्य प्रतियोगी लभ्यते। पटादीनां कदाचित् सत्त्वे तत्प्रतियोगिकाभावस्यानादिनित्यत्वानुपपत्तिरिति चेत्, शशविषाणादेरत्यन्तासत एव प्रतियोगित्वं भविष्यति। अप्रामाणिकस्यासतः कथं प्रतियोगित्वमिति चेत्, किं तस्य धर्मिसत्तया कृत्यमस्ति। न हि प्रतियोगित्वं रूपादिवद्धर्मिसत्तासापेक्षम्। घटादीनामपि प्रागभावप्रध्वंसयोः काले सत्ताभावात् प्रतियोगित्वाभावप्रसङ्गात्। यदा – कदाचित् सत्तायाः तदानीमनुपयोगात्। प्रतीतिमात्रं तूपयुक्तम्। तच्च असतोप्यस्त्येव। अत एवात्यन्ताभावः सर्वोप्यप्रामाणिकप्रतियोगिकः। न कश्चिदपि प्रामाणिकप्रतियोगिकः। प्रागभावप्रध्वंसाभ्यां साङ्कर्यप्रसङ्गात्।

ननु 'घटः पटो न' इत्यादिप्रतीतिगोचरः अन्योन्याभावोऽप्यस्ति। कथं त्रिविध एवाभावः। न चायं भेदाख्यो भाव एव। नञर्थोल्लेखिधीविषयत्वात्। न चायं संसर्गाभावेऽन्तर्भवति। घटवत्यपि भूतळे, भूतळं घटो न भवतीति प्रतीतेः। उच्यते – पृथक्त्वं, भेदः, अन्योन्याभावश्चेत्येते शब्दाः पर्यायाः। सहाप्रयोगनियमदर्शनात्। घटकरीरकलशादिशब्दानां सहाप्रयोगनियतानां पर्यायत्वदर्शनात्। अन्यथा घटपटादिशब्दवत्सहप्रयोगोऽपि स्यात्। न चैतेषां शब्दानां सहप्रयोगो दृश्यते। पर्यायत्वं च अर्थाभेदमन्तरा न युज्यते। न हि भिन्नेष्वर्थेषु

प्रयुज्यमाना घटपटादिशब्दाः पर्याया भवन्ति। ततश्चान्योन्याभावो भेदाद्यात्मक एव। मयोक्तयुक्त्या भेदादिरेवान्योन्याभावात्मकः, न पदार्थान्तरम्। भेदश्च नञर्थानुल्लेखिधीविषयत्वाद् भाव एव। ननु अन्योन्याभावस्य नञर्थोल्लेखिधीविषयत्वेन अभावत्वात् तदात्मको भेदः अभावः किं न स्याद्। विनिगमनाविरहादिति वाच्यम्। "इदमस्मात् पृथक्, इदमस्मात् भिन्नम्" इत्यादिप्रतीतेर्नञा अर्थोल्लेखितत्वाभावात्। अन्योन्याभावस्य नञर्थोल्लेखिधीविषयत्वेपि प्रथमप्रतिपत्तौ तदभावात्। अभावत्वव्यवहारस्तु क्वचिन्निषेध -धीविषयत्वेनाप्युपपन्नः।

न चान्योन्याभावस्य भेदात्मकत्वेऽपि पृथङ्-निरूपणम् कुतो न स्यादिति वाच्यम्। भेदस्य धर्मिस्वरूपत्वेन द्रव्यादिभ्यः पदार्थान्तरत्वादेव पृथङ्-निरूपणमयुक्तम्। न च भेदस्य धर्मिस्वरूपत्वे ज्ञातेपि धर्मिणि भेदाज्ञानादिकं कथमिति वाच्यम्। भूतविवेकोक्तरीत्या विशेषबलात् शङ्कायाः परिहरणीयत्वात्। एतेन गुणकर्मादीनां द्रव्येण धर्मिणा अभिन्नत्वेपि पृथङ्-निरूपणमिव भेदस्यापि पृथङ्-निरूपणं किं न स्यादिति निरस्तम्। भेदस्य धर्मिणा अत्यन्ताभिन्नत्वेन न पृथङ्- निरूपणमित्युक्तत्वात्। गुणकर्मादीनां तु भिन्नाभिन्नत्वं न त्वत्यन्ताभिन्नत्वमेवेति वैषम्यमित्यास्तां विस्तरः ॥ **इत्यभावविवेकः** ॥

## शक्त्यादिपदार्थानां क्लृप्तपदार्थेष्वेवान्तर्भावः

ननु यादृशादेव करतलानलसंयोगाद् दाहो जायते तादृशादेव मणिसमवधानदशायां दाहो न जायत इति मणिसमवधानं दाहप्रतिबन्धकमिति तत्प्रतिबध्यः कश्चित्पदार्थः अङ्गीकार्यः। कार्यानुकूलयत्किञ्चिद्धर्मविघटकत्वमेव प्रतिबन्धकत्वम्। तथाचात्र मणिप्रतिबध्यो वह्निनिष्ठो धर्मोन्यो न लभ्यत इति वह्निनिष्ठा शक्तिः वह्निना सहैव जाता प्रतिबध्या अङ्गीकार्या। नन्वेतादृशपदार्थान्तराङ्गीकारे गौरवम्। न च तत्र प्रत्यक्षं प्रमाणमस्ति। अतीन्द्रियत्वात्। नाप्युक्तार्थापत्तिः। प्रतिबन्धकाभावस्यापि कारणचक्रे प्रवेशाङ्गीकारेण मणेरेव दाहप्रतिबन्धकस्य सद्भावेन मणिसमवधानदशायां प्रतिबन्धकाभावरूपकारणान्तराभावादेव दाहाभावोपपत्तेरिति चेन्न। उत्सर्गापवादयोरभावप्रसङ्गात्। तथाहि - सत्यां सामग्र्यां यद्बलात् कार्यानुत्पादः स एवापवादः। यदि कारणचक्रे प्रतिबन्धकाभावोऽपि प्रविष्टः तर्हि सामग्र्यभावादेव कार्यानुत्पत्तेः अपवादवार्ता लुप्येत। एवं 'व्रीहीन् प्रोक्षति' इत्यादौ प्रमितप्रोक्षणक्रियाजन्यफलशालित्वनिर्वाहाय व्रीहिषु सहज-शक्त्यतिरिक्ता काचिदाधेयशक्तिरङ्गीकार्या।

एवं श्रवणमनननिदिध्यासनबन्धमोक्षादिपदार्थाश्च प्रामाणिकाः सन्ति। तत्कथमष्टधैवेति नियम इति चेत् सत्यम्। वस्तुसामर्थ्यापरपर्यायेण विशेषेण सहजशक्त्याधेयशक्त्योः सङ्ग्रहः। श्रवणादीनां

तु युक्तिसाहित्य-तदसाहित्य नैरन्तर्यादिविशेषितज्ञानात्मकत्वेन बुद्ध्या सङ्ग्रहः। एवं बन्धः स्वरूपतिरोभावः। स च स्वरूपानुभव-प्रागभाव एव। मोक्षस्तु स्वरूपानुभव एव। अनुभवस्तु बुद्धिविशेष एवेति बुद्ध्या सङ्गृहीतः। ननु स्वरूपानुभवो मोक्ष इत्ययुक्तम्। तथाहि – ज्ञानानन्दादि जीवस्वरूपं नित्यम्। तद्विषयका-नुभवः साक्ष्येव। सोऽपि नित्य एवेति ज्ञानादिसाध्यत्वानुपपत्तिरिति इति चेन्न। नित्यस्यापि भावरूपाज्ञानेनावृतस्य अनुभवाभावोपपत्तेः। श्रीनारायणप्रसादेन ज्ञानेन अज्ञाननिवृत्तौ परमानन्दानुभवो भवतीति सर्वमतिमङ्गलम्।

सुद्रव्यैस्सुगुणैर्विशेषबलतः सामान्यगैः कर्मणा
ह्यंशांशिव्यवहारभागपि भिदासंस्पर्शगन्धोज्झितः।
ज्ञानानन्दविशिष्ट इज्यत इह श्रीशेषशायी हरिः
मत्पूर्वार्जितपुण्यजन्मयुतया कृत्याऽनया प्रीयताम्॥

स्वस्वानन्दमतिक्रियादि हुतभुग् ज्वालादि(?)वादिक्षमः
क्षुद्रक्षुभ्यददक्षपक्षबहुलप्रेक्षाचणोच्छोषणः।

दुर्वाद्यम्बुदसम्भ्रमभ्रमकरव्याख्यारवो मद्गुरुः
योऽयं मध्वमरुद्धृदम्बरगतस्तुष्येत् स तापान् नुदन्॥

यदीयाहेयपीयूषपानान्मृतिभयोज्झिताः।
भूमौ सुमनसोऽभूवन् जयार्यः प्रीयतां स नः॥

यदीयचन्द्रिकालोकाद् दुद्रुवुर्मायिदस्यवः ।
आढ्यास्तापविनिर्मुक्ता व्यासेन्दुः प्रीयतां स नः ॥

यदीयमुखपङ्कजात् सपदि वाक्यमाकर्णयन्
स्वकीयदृढदुर्मतिं परिविधूय विद्वत्तरः ।
शठोप्यशठयिष्यते सहज एष विद्याचणः
मदीयगुरुराडयं सुकृतभाग् भवेन्मत्कृतेः ॥

न शाठ्यान्नापि वैयात्यान्न मात्सर्यान्न च क्रुधः ।
किन्त्विदं निर्मितं प्रीत्यै सेव्यतां जानकीशितुः ॥

शौनकाचार्यगोत्रोत्थरामचन्द्रविपश्चिता ।
पदार्थानां विवेकोऽयं निर्मितो ध्रियतां बुधैः ॥

**इति श्रीरामचन्द्राचार्य(श्रीमद्रघुनाथतीर्थपूज्यचरण)विरचित-**
**पदार्थविवेकः समाप्तः ॥**
**श्रीकृष्णार्पणमस्तु**

– – – – – –

**॥श्रीमध्वेशार्पणमस्तु ॥**

श्रीहनुमद्भीममध्वान्तर्गतनरहरिरामकृष्णवेदव्यासाय नमः

॥ श्रीगुरुभ्यो नमः ॥

श्रीवेदव्यासाय नमः

# लघुपदार्थविवेकः

प्रणम्य रामचन्द्राङ्घ्रिं दशप्रमतिपूर्वकान्।
सङ्गृह्यन्ते पदार्थाश्च दशप्रमतिवर्त्मना॥

## पदार्थविवेकः

तत्र प्रमितिविषयाः पदार्थाः। ते चाष्टविधाः। द्रव्य-गुण-कर्म-सामान्य-विशेष-विशिष्ट-अंशि-अभावभेदात्। द्रव्यत्वाद्येव द्रव्यादीनां लक्षणम्।

## द्रव्यविवेकः

तत्र महत्-अहङ्कार-इन्द्रिय-मात्रा-भूत-अज्ञान-तमः-काल-देश-वर्ण- आत्मनश्चेत्येकादश द्रव्याणि।

## महत्तत्वविवेकः

अत्र महत्त्वं जातिविशेषः, अहङ्कारोपादानत्वं वा। तद्-द्विविधम्। नित्यम्, अनित्यं च। नित्यं सूक्ष्मरूपम्। सा प्रकृतिरेव। ततोऽपि सूक्ष्मं किञ्चिन्नेष्यते। अनित्यं द्विविधम्। असंसृष्टम्, संसृष्टं चेति। साक्षात्-प्रकृतिमूलकम् असंसृष्टम्। यथा ब्रह्माण्डाद्बहिष्ठम्। महदादिपरम्परया प्रकृतिमूलकं संसृष्टम्। यथा ब्रह्माण्डान्तर्गतं घटपटादि च।

## अहंतत्वविवेकः

अहंत्वं च 'अहं करोमि' इत्यनुभवसिद्धो जातिविशेषः। साक्षान्महदुपादेयत्वं वा साक्षादिन्द्रियोपादानत्वं वा। तदप्यहंद्रव्यं द्विविधम्। नित्यम्, अनित्यं चेति। नित्यं सूक्ष्मरूपं गुणत्रयाद्युपचितं प्रकृति- शब्दाभिधेयम्। अनित्यं द्विविधम्। असंसृष्टम्, संसृष्टं चेति। तत्राद्यं गुणत्रयोपचितं ब्रह्माण्डाद्बहिष्ठम्। द्वितीयं यथा ब्रह्माण्डान्तर्गतं स्थूलम्।

## इन्द्रियविवेकः

इन्द्रियं तु क्रियाविशेषं प्रति साधनविशेषः। तद्-द्विविधम्। नित्यम्, अनित्यं चेति। नित्यं सूक्ष्मरूपम्। अनित्यमन्यत्। तदपि द्विविधम्। असंसृष्टसंसृष्टभेदात्। तत्राद्यं बाह्यम्। द्वितीयं त्वान्तरम्। इन्द्रियं पुनर्द्वादशविधम्। बुद्धि-मनो-घ्राण-रसन-चक्षुस्-त्वक्-श्रोत्र-वाक्-पाणि-पाद- पायु-उपस्थभेदात्। अत्रोद्देशे श्रोत्रादिघ्राणान्तता वा द्रष्टव्या।

तत्र द्रव्यनिश्चयरूपज्ञानसाधनं बुद्धिः। स्मरणसाधनं मनः। तत्त्वं च संस्कारमात्ररूपावान्तरव्यापारकत्वं वासनोपादानकत्वं वा। गन्धोपलब्धिसाधनं घ्राणम्। रसोपलब्धिसाधनं रसनम्। रूपोपलब्धिसाधनं चक्षुः। शब्दोपलब्धिसाधनं श्रोत्रम्। स्पर्शोपलब्धि-साधनं त्वक्। सप्तेमानि ज्ञानसाधनत्वात् ज्ञानेन्द्रियाणि; 'सप्तगते-र्विशेषित्वात्' इति सूत्रोक्तानि। घ्राणं तु नासागतं गन्धं गृह्णाति।

तद्ग्राह्यत्वावच्छेदकं च महत्वसमानाधिकरणोद्भूतगन्धत्वम्। रसनेन्द्रियं जिह्वागतं रसवद् द्रव्यं गृह्णाति। तद्ग्राहतावच्छेदकं च महत्वसमानाधिकरणोद्भूतरसत्वम्। सर्वशरीरगता त्वक् स्पर्शं गृह्णाति। तद्ग्राहतावच्छेदकं च महत्वसमानाधिकरणोद्भूतस्पर्शत्वम्। श्रोत्रं च कर्णगोळकादिगतं सच्छब्दं गृह्णाति। तद्ग्राहतावच्छेदकं च महत्वसमानाधिकरणोद्भूतशब्दत्वम्। वचनक्रियासाधनं वागिन्द्रियम्। आदानक्रियासाधनं पाणिः। गमनक्रियासाधनं पादः। विसर्जनक्रियासाधनं पायुः। आनन्दजनकक्रियासाधनम् उपस्थम्। एतानि पञ्च कर्मेन्द्रियाणि। एतेषां वचनादीनि फलम्। परशोरिव छिदा। एतानि द्वादशेन्द्रियाणि नित्यानित्यभेदेन चावान्तरभिन्नानि।

साक्षाद्भूतोपादानं मात्रा। तत् पञ्चविधम्। शब्द-स्पर्श-रूप-रसगन्धभेदात्। तत्पुनर्द्विविधम्। नित्यम्, अनित्यं च। नित्यं सूक्ष्मरूपम्। अनित्यमन्यत्। तद्-द्विविधम्। असंसृष्टसंसृष्टभेदात्। तत्राद्यं बाह्यम्। द्वितीयं त्वान्तरम्।

## भूतविवेकः

भूतत्वं जातिः। तदाश्रयभूतं पञ्चविधम्। पृथिवी-अप्-तेजो-वायु-आकाशभेदात्। अत्रोद्देशे आकाशादिपृथिव्यन्तत्वं वा ग्राह्यम्।

तत्र गन्धवती पृथिवी। साक्षाद्गन्धवतीति यावत्। गन्धोपादानं वा। नीलरूपवती च। सा द्विविधा। नित्या, अनित्या च।

सूक्ष्मरूपा नित्या। द्वितीयाऽन्या। सा द्विविधा। असंसृष्टसंसृष्टभेदात्। तत्राद्या बाह्या। द्वितीया त्वान्तरा। साऽपि त्रिविधा। शरीरेन्द्रियविषयभेदात्। तत्र सुखदुःखादिभोगाधिकरणं शरीरम्। तद्-द्विविधं लिङ्गं स्थूलं चेति। तत्र शरीरमस्मदादीनां भूस्थानम्। इन्द्रियं घ्राणम्। विषयो मृत्पाषाणसुवर्णरूप्यमाणिक्यादिः। शरीरं पुनर्द्विविधम् - योनिजम्, अयोनिजं चेति। तत्र योनिप्रवेशाद्युपेतं योनिजम्। अन्यथाभूतम् अयोनिजम्। योनिजमपि जरायुजम् अण्डजमिति द्विविधम्। तत्र जरायुरावेष्टनचर्मविशेषः। उल्बमिति यावत्। तत्र जरायुजं मनुष्य-अश्व-सूकरादीनां शरीरम्। अण्डजं भुजङ्गविहङ्गादीनाम्। अयोनिजमपि स्वेदजोद्भिज्जादिभेदात् बहुविधम्। स्वेदजं शिरोरुहमध्यवृत्तीनां शरीरम्। उद्भिजं तरुगुल्मादि।

शुक्लरूपत्वम् अपां लक्षणम्। माधुर्यं शीतस्पर्शमात्रवत्त्वं सांसिद्धिकद्रवत्ववत्त्वं वा। आपस्त्रिविधाः। शरीरेन्द्रियविषयभेदात्। शरीरं मत्स्यादिजलचराणाम्। इन्द्रियं रसग्राहकं रसनम्। विषयः सरित्समुद्रकरकादिः। शिष्टं पूर्ववत्।

उष्णस्पर्शवत् तेजः। तद् द्विविधम्। नित्यमनित्यं च। पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। शरीरं तेजोलोकनिवासिनाम्। इन्द्रियं रूपग्राहकं चक्षुः। विषयो वह्निर्विद्युदादिः।

नीरूपस्पर्शवान् वायुः। स त्रिविधः। शरीरेन्द्रियविषयभेदात्। शरीरं पिशाचादीनाम्। इन्द्रियं स्पर्शग्राहकत्वम्। विषयः कम्प-

पक्ष्मानिलादिः। शिष्टं पूर्ववत्। नीरूपः शब्दवान् आकाशः। सोऽपि त्रिविधः। शरीरेन्द्रियविषयभेदात्। शरीरमन्तरिक्षादिवासिनाम्। इन्द्रियं शब्दग्राहकं श्रोत्रम्। विषयो विवरादिः। शिष्टं पूर्ववत्। तदिमानि पञ्चभूतानि परमाण्वादिक्रमेण स्थूलात् स्थूलतरान् पटादीनुत्पादयन्ति।

## अज्ञानविवेकः

ज्ञाननिवर्त्यमज्ञानम्। सूक्ष्मप्रकृत्यात्मकमेव। ज्ञानाभाव-मिथ्याज्ञान- संशय- अहङ्कार-ममकारादेर्निमित्तम् अनाद्येव तत्त्वज्ञान-निवर्त्यं च। अत एव न तत्र संसृष्टासंसृष्टभेदः नित्यानित्यभेदो वाऽस्ति। नन्वनादेः कथं निवृत्तिः? इति चेन्न। अनादेरपि प्रागभावस्य निवृत्तिदर्शनात्। भावस्य कथं निवृत्तिः? इति चेन्न। निवर्तकशून्यत्वस्यैव प्रयोजकत्वेन भावत्वस्यानादित्वादेरनिवृत्तिं प्रत्यप्रयोजकत्वात्।

## तमोविवेकः

रूपित्वे सति निस्पर्शत्वं तमसो लक्षणम्। तच्च 'नीलं तमश्चलति' इत्यादिप्रतीत्या चलनादिक्रियावत्। कालवदेव केवलं प्रकृतिभागेनैवारभ्यते। अत एव न तत्र संसृष्टासंसृष्टविभागः।

## कालविवेकः

अतीतानागतादिव्यवहारहेतुः कालः। स च क्षणलवादिभेदेनानन्तविधः। स्वत एव विशेषवांश्च। केवलं प्रकृतिभागेनैवारभ्यते।

प्रळये मुक्तौ च सद्भावात्। तत्समुदाय एव घटिका। तत्समुदाय एव मुहूर्तम्। तत्समुदायो दिनम्। तत्समुदायः पक्षः। तत्समुदायो मास इत्यादि।

ननु क्षणलवादीनां स्वरूपेणोत्पादविनाशशालित्वात् तत्समुदायः कथं घटिका? घटिकादेरपि विनाशशालित्वात् तत्समुदायः कथं मुहूर्तम्? इति चेन्न। घटिकावयवत्वेन यावान् क्षणादिक्लिप्तपर(?) तावत् तत्क्षणविशिष्टान्तिमक्षण एव घटिकादिरिति न किञ्चिदनुपपन्नम्।

### देशविवेकः

दिग्व्यवहारहेतुर्दिक्। सा चानादिनित्या। तदवयवाश्चानादयो नित्या अनन्ताश्च। परस्परमत्यन्तभिन्नाः। समुदायिनाऽत्यन्ताभिन्नाश्च। 'इह पक्षी, नेह पक्षी' इत्यादिप्रतीतिसिद्धाश्च।

### वर्णविवेकः

सर्वगता वाचका वर्णाः। ते च ककारादिभेदेन बहुविधाः। अप्रतिघद्रव्यरूपाः श्रोत्रेन्द्रियग्राह्याश्च।

### आत्मविवेकः

ज्ञानाधिकरणमात्मा। स द्विविधः। परमात्मा जीवात्मा चेति। तत्र परमात्मा जीवजडेभ्यो विलक्षणः। अनन्तज्ञानानन्दबलक्रियाद्यनन्तधर्मवान्। ज्ञानादयश्च धर्माः प्रत्येकमनन्ताः। ते चात्यन्त-

मभिन्नाः। मत्स्यकूर्माद्यनन्तांशवान्। ज्ञानानन्दाद्यात्मकविग्रहवांश्च। द्विज(?)संयोगादिरूपजन्यधर्माश्च भगवताऽत्यन्तभिन्नाः।

अस्वतन्त्रोऽल्पधर्मवान् जीवात्मा। अनाद्यविद्याकामकर्मसंवेष्टित एव। तन्निमित्तकस्थूलसूक्ष्मशरीरसम्बन्धवानेवाहङ्कारममकारादिसंवलितो निषिद्धाचरणविहिताकरणनिमित्तकान् बहून् क्लेशाननुभुङ्क्ते। तत्र ज्ञानानन्दबलक्रियाद्यात्मका मुक्तियोग्याः परस्परमीश्वराच्चात्यन्तभिन्नाः। निचोच्चतावन्त एव न साम्यवन्तः। चिदानन्दविग्रहाः। स्वरूपभूतचक्षुरादीन्द्रियवन्तः। संसारेऽनभिव्यक्तस्वरूपाः। भगवत्प्रसादावाप्तलिङ्गशरीरभङ्गा अनावृतस्वभावाश्च भवन्ति। ते च देवर्षिगन्धर्वचक्रवर्तिभेदेन बहुविधाः, गणशोऽप्यनन्ताः।

संशयदुःखबलादिविरुद्धोभयधर्मस्वरूपा नित्यसंसारिणः। तेऽपि परस्परमीश्वरेण भिन्नाः। नीचोच्चभावादिमन्तः। नरकभूमिस्वर्गलोकगताः परिवर्तन्त एव। तेऽप्यनन्ता एव।

मिथ्याज्ञानदुःखादिस्वभावास्तमोयोग्या दुःखात्मकविग्रहवन्तः। दुःखात्मकेन्द्रियादिमन्तश्च। अत एव बलशून्याः। हरिद्वेषादिस्वरूपाः। ते च स्वसाधनपरिपाकावाप्तभगवद्-द्वेषातिशयावाप्तलिङ्गभङ्गा न पुनरावर्तन्ते। ऊर्ध्वमध्यादिभेदेन बहुविधे नरके स्वात्मस्वरूपभूतं दुःखमनुभवन्ति। ते च परस्परमीश्वरेण चात्यन्तभिन्नाः। तेऽपि गणशोऽप्यनन्ताः। नीचोच्चभावादिमन्तः दैत्य-रक्ष-पिशाचादिभेदेन बहुविधाश्च।

## गुणविवेकः

तत्र गुणो बहुविधः। गन्ध-रस-रूप-स्पर्श-शब्द-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्म-अधर्म-संस्कार-परिमाण-संयोग-विभाग-गुरुत्व-द्रवत्व-स्नेहादिभेदात्।

## गन्धविवेकः

घ्राणग्राह्यो गुणो गन्धः। स च द्विविधः। सुरभिरसुरभिश्चेति। द्विविधोऽपि पृथिव्यामेव। न जलादौ। गन्धमात्रा-जन्यत्वाभावात्। पुनर्द्विविधः। यावद्-द्रव्यभावी, अयावद्-द्रव्यभावी चेति। तत्राद्यो धर्मिणाऽत्यन्ताभिन्नः। द्वितीयस्तु भिन्नाभिन्नः।

## रसविवेकः

रसनग्राह्यो गुणो रसः। स च मधुर-आम्ल-कटु-तिक्त-कषाय-लवणभेदेन षड्विधः। स चायं जलेऽस्ति। जलस्य साक्षादेव रसमात्रा-जन्यत्वाभावात्। पृथिव्यां च वर्तते। तस्यां जलभागस्यापि अनुस्यूतत्वात्। न च पुनस्तेजसादौ वर्तते। तेषां जलभागाननुस्यूत-तत्वात्। रसमात्राजन्यत्वाभावाच्च। सोऽपि पुनर्द्विविधः। यावद्-द्रव्यभावी, अयावद्-द्रव्यभावी चेति। तत्राद्यो धर्मिणाऽत्यन्ताभिन्नः। द्वितीयस्तु भिन्नाभिन्नः।

## रूपविवेकः

चक्षुःग्राह्यो गुणो रूपम्। शुक्ल-नील-पीतादिभेदेनानेकविधम्।

तच्च पृथिवीजलतेजोमात्रवृत्ति। तेजसः साक्षाद् रूपमात्राजन्यत्वात्। जलपृथिव्योस्तु स्वोपादानेन तेजसाऽनुस्यूतत्वात्। न वाय्वादौ। वाय्वादेश्च तेजःकारणत्वाभावात्। रूपमात्राजन्यत्वाच्चेत्यादि विवेकः। शिष्टं तु पूर्ववत्।

## स्पर्शविवेकः

त्वगिन्द्रियग्राह्यो गुणः स्पर्शः। स च शीत-उष्ण-अनुष्णाशीत-भेदेन त्रिविधः। पृथिव्यप्तेजोवायुमात्रवृत्तिः। वायोः साक्षात् स्पर्शमात्राजन्यत्वात्। तेजोजलपृथिवीनां तु स्वकारणवायुभागानुस्यूतत्वात्। शिष्टं पूर्ववत्।

## शब्दविवेकः

श्रोत्रग्राह्यो गुणः शब्दः। ध्वन्यात्मकशब्दस्यैवात्र लक्ष्यत्वेन न वर्णात्मकशब्देनासम्भवः शङ्कनीयः। स चायं पृथिव्यादिपञ्चभूत-वृत्तिः। आकाशस्य साक्षाच्छब्दमात्राजन्यत्वात्। तदितरेषां चतुर्णा -माकाशभागानुस्यूतत्वादित्यादि। शिष्टं तु पूर्ववत्।

## बुद्धिविवेकः

सर्वव्यवहारहेतुर्बुद्धिः। सा द्विविधा। चेतनस्वरूपा वृत्तिरूपा चेति। तत्राद्या ऐश्वरी-माहेश्वरी-आर्जवी-तात्विकी-अतात्विकी-अयोगिनीति षड्विधा। तत्राद्या स्वपरगताशेषविषया। स्वतन्त्रा च। अनादिनित्या च। द्वितीया तु परगताखिलविशेषाणां स्वगताखिल-विशेषाणां च विषयिणी, ईश्वरगतानामखिलविशेषाणामविषयि-

ण्यपि, इतरापेक्षयाऽधिकविषयिण्येव। तत्रापि ईश्वरापेक्षयाऽस्पष्ट-ऽपि, इतरापेक्षया स्पष्टैव। तृतीया तु पूर्वोक्ताभ्यां द्वाभ्यामस्पष्टाऽपि, इतरापेक्षया स्पष्टा, अधिकविषया च। एवं तात्विक्यादयोऽपि द्रष्टव्याः।

तत्रायोगिनी त्रिविधा। सात्त्विकी राजसी तामसी चेति। तत्राद्या यथार्थैव। द्वितीया तु संशयरूपैव। तृतीयातु विपर्यय-रूपैव। द्वितीयाऽपि चतुर्विधा। तात्विकी, अतात्विकी, योगिनी, अयोगिनी चेति। तत्राद्या प्रायेण यथार्थैव। इतरास्तु प्रमासंशय-विपर्ययरूपाः।

**प्रमाणविवेकः**

तत्र सर्वत्र प्रमारूपिणी बुद्धिः केवलप्रमाणम् इत्युच्यते। यथाव स्थितज्ञेयविषयीकारित्वरूपस्य प्रमाणलक्षणस्य तत्रापि सत्वात्। सा त्रिविधा। प्रत्यक्षानुमितिशाब्दभेदात्।

इन्द्रियजन्या बुद्धिः प्रत्यक्षम्। अनुमानजन्या बुद्धिरनुमितिः। शब्दजन्या बुद्धिः शाब्दी। तदिदमिन्द्रियमनुमानं शब्दश्चेति त्रयं यथार्थज्ञानसाधनत्वात् यथावस्थितज्ञेयविषयीकारित्वरूपप्रमाण-लक्षणभावेन प्रत्यक्षानुमानशब्दाख्यमनुप्रमाणमित्युच्यते।

**प्रत्यक्षविवेकः**

निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम्। इन्द्रियदोषाः काचादयो

रागादयश्च। अर्थदोषाश्चातिदूरत्वातिसामीप्यादयः। तत्रेन्द्रियं साक्षि-बुद्धि-मनः-श्रोत्र-त्वक्-चक्षु-रसन-घ्राणभेदेनाष्टविधम्। क्वचिद्-बुद्धि-मनसोहेमन्तशिशिरयोरिवैक्याभिप्रायेण साक्षिषडिन्द्रियभेदेन प्रत्यक्षं सप्तविधमित्युक्तिः। 'सप्तगतेर्विशेषितत्वात्' इति ज्ञानेन्द्रियाणां सप्तत्वव्यवहारात्। 'मनोबुद्धी तु द्वादश' इति स्पष्टप्रमाणाच्च। दिविष्टत्वदिवःपरत्वादिविरुद्धव्यवहारस्य लोकेषु विवक्षाभेदेन त्रित्व-सप्तत्वाद्याश्रयणेन समाहितत्वाच्च। तत्र स्वरूपेन्द्रियं साक्षीत्युच्यते। अन्तःकरणपरिणामरूपाः सुखदुःखादयो ज्ञानगतप्रामाण्यमात्मा-कारश्चेत्यादयस्तद्विषयाः। संयोगश्च प्रत्यासत्तिः। घटादेर्याथार्थ्यं बुद्धेर्विधिविषयः। विमर्शश्च प्रत्यासत्तिः। अतीतादिर्मनसो विषयः। संस्कारश्च प्रत्यासत्तिः।

शब्दः तद्गता धर्माश्च श्रोत्रविषयाः। महत्वसमानाधिकरणो-द्भूतरूपवद् द्रव्यधर्माश्च केचन। वायुस्पर्शोऽपि त्वचो विषयः। अत्र समवायस्यानङ्गीकारात् संयोगः प्रत्यासत्तिः। महत्वसमानाधिकरणो-द्भूतरूपं द्रव्यं रूपं रूपत्वं सङ्ख्या च चक्षुषो विषयः। संयोगः प्रत्यासत्तिः। रसो रसगताश्च धर्माः रसनस्य। गन्धो गन्धगताश्च धर्मा घ्राणस्य। यथायथमष्टविधेन्द्रियविषयसुखादिप्रमां प्रति साक्ष्यादीन्यष्टविधेन्द्रियाणि साधनमिति प्रत्यक्षमनुप्रमाणम्।

साधनं तु करणम्। करणं कारणविशेषः। कारणं चानन्यथा-सिद्धनियतपूर्वभावि। तद् द्विविधम्। उपादानं निमित्तं चेति।

कार्याभिन्नं कारणमुपादानकारणम्। रूपादेरपि घटाद्यभिन्नत्वात् कारणमित्युक्तम्। दण्डादावतिप्रसङ्गवारणाय 'अभिन्ने'ति। रूपाद्य-भिन्नत्वात् पुनः तद्वारणाय 'कार्ये'ति। ननु कारणस्य कार्याभेदे कारणलक्षणानुपपत्तिः। नहि स्वयमेव स्वं प्रति नियतपूर्वभावि पश्चाद्भावि च भवति। मैवम्। जन्यवस्तुनो ह्यवस्थाद्वयम्। कारणा-वस्था कार्यावस्था चेति। कारणावस्थामापन्नस्य पूर्वभावित्वम्, कार्यावस्थामापन्नस्य पश्चाद्भावित्वम् इत्यङ्गीकारे बाधकाभावात्। अत एव सदसत्कार्यवादोऽपि। कार्यकारणयोरत्यन्ताभेदाङ्गीकारे 'न हि स्वयं पूर्वभावि पश्चाद्भावि च' इत्यादिशङ्का स्यात्। न चैवम्। तयोर्भेदाभेदाङ्गीकारात्। कार्यभिन्नं कारणं निमित्तकारणम्। तच्च द्रव्यादिभेदेनानेकविधम्।

**अनुमानविवेकः**

व्याप्तिविशिष्टस्य समुचितदेशवृत्तिज्ञानमनुमानम्। प्रमिति-साधनत्वादनुमानम् अनुप्रमाणं च। व्याप्तिश्चाविनाभावः। यस्य येन विनाऽनुपपत्तिस्तस्य तेन सह व्याप्तिरिति निष्कर्षः। व्याप्तिश्च द्विविधा। अन्वयतो व्यतिरेकतश्चेति। समुचितदेशवृत्तिता च क्वचित् पक्षे सत्वम्, क्वचिदसत्वमित्यादि। व्याप्तिग्रहश्चोपाध्यभावज्ञान-सहकृतसहचारज्ञानेन।

यश्च साध्यव्यापकः साधनाव्यापकः स उपाधिरित्युच्यते। समव्याप्तो विषमव्याप्तश्च। समव्याप्तो यथा आर्द्रेन्धनसंयोगो वह्न्य-

नुमाने। विषमव्याप्तो यथा शब्दो नित्यः शब्दत्वात् इत्यत्र श्रावणत्वम्। पुनस्त्रिविधः। पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, शुद्धसाध्यव्यापकश्चेति। आद्यो यथा। वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादिति प्रयोगे उद्भूतरूपवत्वम्। द्वितीयो यथा। अष्टमगर्भस्य मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वम्। तृतीयो यथा। प्रसिद्धानुमाने आर्द्रेन्धनसंयोगादिः।

साध्यधर्मविशिष्टः पक्षः। लिङ्गाभिमतस्य यत्र यदा यद्धीजननानुकूलसहकारिसम्पत्तिः, तत्र तदा तं प्रति साध्यम्। तादृशसाध्यविशिष्टस्य तदा तं प्रति तस्यानुमितौ पक्षः। तस्य भावः पक्षता। सा च लिङ्गपरामर्श एवास्ति। न ततः पूर्वम्। अनुमितिसामग्रीसम्पत्तिरूपत्वात् पक्षतायाः। यत्र लिङ्गपरामर्शो जायते, तत्र वस्तुगत्या पक्षे व्याप्यवत्ताज्ञानमेवापेक्षितम्। न तु पक्षताज्ञानमपि। तस्याहेतुत्वात्।

तदनुमानं द्विविधम्। स्वार्थं परार्थं चेति। स्वप्रतिपत्तिहेतुः स्वार्थम्। धूमादिज्ञानमेव। परप्रतिपत्तिहेतुः परार्थम्। तच्च परप्रतिपत्तिसाधनं वाक्यमेवोपचारादनुमानमिति गीयते। तस्य पञ्चाङ्गानि नियतानीति नास्माकं सम्मतिः। किन्तु यावता वाक्येन परो बोध्यते तावदेव प्रयोक्तव्यम्। नाधिकम्। नापि न्यूनम्। प्रतिज्ञा-हेतु- उदाहरण- उपनय- निगमनरूपपञ्चविधवाक्यप्रयोगोऽपि मन्दस्यार्थबोधाभावे पुनस्तद्बोधाय वाक्यान्तरस्यापि प्रयोक्तव्यत्वात्।

सूक्ष्मज्ञस्य धूमवत्वादिति हेतुमात्रप्रयोगेऽनुमितिजननेन वाक्यान्तर-वैय्यर्थ्याच्च।

पुनरनुमानं द्विविधम्। साधनानुमानं दूषणानुमानं चेति। साध्य-प्रमितिसाधनम् आद्यम्। यथा प्रसिद्धानुमानम्। द्वितीयं द्विविधम्। दुष्टप्रमितिसाधनं तर्कश्चेति। आद्यं यथा। प्रमेयत्वहेतुर्न वह्निसाधनम्, व्यभिचारत्वादित्यादि। अत्र द्विविधानुमानस्य स्वसमुचितदेशवृत्तित्वम्, सपक्षे सत्वम्, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेत्यादीनि बहून्यङ्गानि। द्वितीयो यथा 'पर्वतो यद्यग्निमान् न स्यात् तर्हि धूमवानपि न स्यात्' इत्यादि। तत्र हि निरग्निकत्वं हेतुः। निर्धूमत्वं साध्यम्। तत्र समुचितदेशवृत्तित्व-अबाधितविषयत्व-असत्प्रतिपक्षत्वातिरिक्तान्यङ्गानि च द्रष्टव्यानि। यथाऽन्यमते केवलान्वयिकेवलव्यतिरेकिणो विपक्षाद्व्यावृत्तिसपक्षवृत्तित्वाति-रिक्तान्यङ्गानि। निरग्निकत्वेनाङ्गीकृतो हेतुः, निर्धूमत्वेनाङ्गीकृतं साध्यमिति पक्षे तु समस्तान्यङ्गान्यपि द्रष्टव्यानि। हेत्वाभास-विविक्ततया ज्ञाताश्च हेतवः साध्यप्रमितिं जनयन्तीति सद्धेतव एवानुमानम्। ते च हेत्वाभासा पञ्चविधा इति नास्माकं सम्मतम्। किन्तु विरोधासङ्गतीति द्वावेव हेतुदोषौ।

**आगमविवेकः**

निर्दोषः शब्दः आगमः। शब्दश्चाकाङ्क्षासन्निधिमतां पदानां

समुदायरूपं वाक्यम्। पदं च न सुप्तिङन्तम्। किन्तु शक्तम्। शक्तिश्च वाच्यवाचकभावसम्बन्धरूपः शब्दस्य सामर्थ्यविशेष एव। तद्ग्रहश्च साक्षाद्बोधे सहकारी। तदुपायश्च व्याकरणोपमानकोशाप्तवाक्यादिः। तदाकारश्च योग्येतरान्वितघटे शक्तमित्यादिः। व्यक्तेरानन्त्येऽपि सादृश्येनैव शक्तिग्रहणसम्भवेन व्यक्त्यन्तरोपस्थित्यनुपपत्तिः। आकाङ्क्षा च पदस्य पदान्तरगतयद्विरहप्रयुक्तान्वयाननुभावकत्वं तत्त्वम्। सन्निधिश्च प्रकृतान्वयबोधविरोधिपदाव्यवधानम्। एतदुभयं शाब्दबोधे हेतुः। योग्यतादर्शनं शाब्दबोध इति तु न साम्प्रतम्। अर्थाबाधरूपयोग्यताया अर्थसत्वरूपत्वेन स्वरूपसत्ताया एव हेतुत्वात्। तथाच – वृत्तिमत्वेनाकाङ्क्षितत्वेन सन्निधिमत्वेन च ज्ञातो योग्यशब्दः शब्दप्रमां जनयति।

वृत्तिश्च प्रतिपादकत्वम्। तद्-द्विविधम्। शक्त्या तदन्यसम्बन्धेन चेति। तत्राद्यं मुख्यवृत्तिरित्युच्यते। तद्-द्विविधम्। परममुख्यं मुख्यं चेति। तत्राद्यं च द्विविधम्। विद्वद्रूढ्या महायोगेन चेति। द्वितीयमपि त्रिविधम्। योगेन रूढ्या योगरूढ्या चेति। अवयवशक्तिर्योगः। समुदायशक्ती रूढिः। उभयसमाहारो योगरूढिः। द्वितीयं द्विविधम्। गौणी लक्षणा चेति। शक्यसादृश्यं गौणी। गौणी द्विविधा। रूढारूढभेदात्। प्रयोजनानपेक्षा रूढा। तदपेक्षाऽन्या। शक्यसम्बन्धो लक्षणा। साऽपि द्विविधा। रूढारूढभेदात्। तदेवं विद्वद्रूढ्या प्रतिपादकत्वं महायोगेन प्रतिपादकत्वं रूढ्या प्रति-

पादकत्वं निरूढलक्षणया प्रतिपादकत्वम् अनिरूढलक्षणया प्रतिपादकत्वं चेति नवविधा वृत्तयः। तासां च पूर्वपूर्वस्यायोगे चोत्तरोत्तरस्य ग्रहणमिति पूर्वपूर्वस्याः प्राबल्यम्। षड्विधोऽपि समासे शक्तिरेव।

उपक्रमो-पसंहारा-भ्यासा-पूर्वता-फलार्थवादो-पपत्तीनामानुगुण्यानुसन्धाने चायमेव तच्छब्दप्रतिपाद्योऽर्थो इति तात्पर्यनिर्णयः। वृत्तिर्धारणासहकारीत्यङ्गीकर्तव्यम्। आदिवाक्यमुपक्रमः। व्याख्यान -मुपसंहारः। एकप्रकारासकृदुक्तिरभ्यासः। स्वबोध्यपुरुषगताज्ञानविरोधिस्वानुपजीव्यमानान्तराग्राह्यत्वमपूर्वता। फलवत्ता फलम्। स्तुत्यादिरर्थवादः। उपपत्तिर्युक्तिः। एवं श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां षण्णामानुगुण्यानुसन्धानमपि कारणम्। वाचकः शब्दः श्रुतिः। व्याप्यार्पकं लिङ्गम्। व्यापकार्पकान्यनेकपदानि निराकाङ्क्षाणि वाक्यम्। एकार्थप्रतिपादकानेकवाक्यसन्दर्भः स्थानम्। निर्णीतस्थले समानोक्तिः समाख्या। एवमन्येऽप्यध्याहारानुषङ्गवृत्तीन्यप्यनुसन्धेयाः। अध्याहारश्च पदस्यैव नार्थस्य।

स चायं शब्दो द्विविधः। वैदिको लौकिकश्चेति। अपौरुषेयश्चतुर्विधः। ऋग्यजुःसामाथर्वभेदात्। ऋगादयः प्रत्येकं द्विविधाः। कर्मब्रह्मकाण्डभेदात्। उपक्रमादीन्यायानुसन्धानवैधुर्यदशायां कर्मप्रत्यायकं कर्मकाण्डम्। यथा 'वसन्ते वसन्ते' इत्यादि। यद्धि पूर्वोक्तदशायामपि ब्रह्मप्रत्यायकं तद् ब्रह्मकाण्डम्। यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि।

अदृष्टसंस्पर्शी द्वितीयोऽप्यनेकविधः। स्मृतिपुराणेतिहाससूत्र-भेदात्। तच्च वशिष्ठ-हारीत-व्यास-पराशर-काश्यप-मानव-याज्ञ-वल्क्य-आग्नेय-दक्ष-कात्यायन-वैष्णव-गौतम-बार्हस्पत्य-सांवर्त-माम्यासादन्(?) - औशनसभेदेन प्राधान्येनाष्टदशधा भिद्यन्ते। सुमन्तु- बभ्रु- पैठीनस- व्याघ्र-कार्ष्ण्याजिनाद्युपस्मृतयश्च बहुविधाः सन्ति। तत्र वसिष्ठादिकश्यपान्तमाद्यं षट्कं सात्विकम्। मानवादि-वैष्णवान्तं द्वितीयं षट्कं राजसम्। गौतमाद्यौशनसान्तं तृतीयं षट्कं तामसम्।

पुराणमपि ब्राह्म-पाद्म-वैष्णव-भागवत-नारदीय-मार्कण्डेय-आग्नेय-भविष्यद्-ब्रह्मवैवर्त-लिङ्ग-वामन-वाराह-मात्स्य-कौर्म-गारुड-स्कान्द-ब्रह्माण्डभेदादष्टादशधा भिद्यन्ते। वायु-विष्णुधर्मोत्तरादीन्यु-पपुराणाण्यपि बहुविधानि सन्ति। तत्र वैष्णव-नारदीय-भागवत-गारुड-पाद्म-वाराहाणि सात्विकानि। ब्रह्माण्ड-ब्रह्मवैवर्त-मार्कण्डेय-भविष्यद्-वामन-ब्राह्माणि राजसानि। मात्स्य-कौर्म-लैङ्ग्य-स्कान्द-आग्नेयानि तामसानीति विवेक्तव्यम्।

भारत-पञ्चरात्रादिभेदेन इतिहासोऽपि बहुविधः। सूत्राण्यपि शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्योतिष-धर्म-देव-ब्रह्मसूत्र-भेदाद् बहुविधानि।

अदृष्टासंस्पर्शलौकिकोऽपि शब्दः 'घटमानय' 'ओदनं पच' 'गामभ्याज' इत्यादिरूपो बहुविधः।

अनुप्रमाणं त्रिविधं मध्वसिद्धान्तरीतितः ।
ध्रियतां हृदये सद्भिरनुशिष्टं यथामति ॥

प्रसक्तानुप्रसक्त्यैवं सप्रपञ्चं समानकम् ।
बुद्धिर्निरूपिता सेयं गुणकाण्डनिवेशनी ॥

**सुखादिविवेकः**

अनुकूलतया वेदनीयं सुखम् । प्रतिकूलतया वेदनीयं दुःखम् । ज्ञानजन्यप्रयत्नजनको धर्मविशेष इच्छा । अनिष्टत्वतत्साधनत्वज्ञान निवर्तकः प्रयत्नजनको धर्मविशेषो द्वेषः । कृतिः प्रयत्नः । विहितक्रियाजन्यो धर्मः । निषिद्धक्रियाजन्योऽधर्मः ।

संस्कारस्त्रिविधः । वेगः, स्थितिस्थापकः, भावना चेति । तत्राद्यो मनोवाय्वादिषु वर्तते । द्वितीयस्तु कटादौ वर्तते । तृतीयस्तु मनसि तत्परिणामो वासनेत्युच्यते । बुद्ध्यादिसंस्कारान्तानां नवानां मन एवोपादानम् । यथायथं चक्षुरादिनिमित्तम् । चेतनस्तु तदाश्रय इति विवेक्तव्यम् ।

एकत्वादिव्यवहारहेतुः सङ्ख्या । मानव्यवहारसाधारणं कारणं परिमाणम् । संयुक्तव्यवहारविषय संयोगः । अधोपतनासाधारणनिमित्तं गुरुत्वम् । द्रवतीति व्यवहारविषयो द्रवत्वम् । अवयवसंश्लेष-सम्पादको धर्मविशेषः स्नेहः ।

**कर्मादिविवेकः**

संयोगविभागासाधारणकारणं कर्म । व्यावर्तको धर्मः सामान्यम् ।

भेदकार्यकारिसामर्थ्यं विशेषः। विशिष्टव्यवहारविषयो विशिष्टः। तद् द्विविधम्। नित्यमनित्यं चेति। तत्राद्यं सार्वज्ञविशिष्टं ब्रह्म। द्वितीयं तु सुखदुःखादिविशिष्टं जीवादि।

अंशीति व्यवहारविषयोऽंशी। सोऽपि पूर्ववद् द्विविधः।

निषेधमुखवेद्योऽभावः। स त्रिविधः। प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावश्चेति। अन्योन्याभावस्तु तत्तदधिकरणस्वरूपमेवेति यथा-यथं द्रव्यादिष्वेवान्तर्भूतः।

तदेवम् "अष्टविधपदार्थज्ञानपूर्वकमाराधितो भगवानशेषदुःखनाशविशिष्टस्वरूपानन्दाविर्भावलक्षणमुक्तिभाजः करोति" इत्यशेषम-तिमङ्गलम्।

न शाठ्यान्नापि वैय्यात्यान्न मात्सर्यान्न च क्रुधः।
किन्त्विदं निर्मितं प्रीत्यै सेव्यतां जानकीशितुः॥

शौनकाचार्यगोत्रेय रामचन्द्रविपश्चिता।
पदार्थानां विवेकोऽयं निर्मितो ध्रियतां बुधैः॥

**इति लघुपदार्थविवेकः समाप्तः॥ श्रीहयवदनः प्रसीदतु॥ श्रीरस्तु॥**

------

**श्रीमध्वेशार्पणमस्तु**

एकं च तत्त्वतो ज्ञातुं
विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि
तस्मात् सर्वत्र जिज्ञसेत् ॥

श्रीशेषचन्द्रिकाचार्यविरचितः

# पदार्थविवेकः

(लघुपदार्थविवेकसहितश्च)

सम्पादकः

विद्वान् के.वि.एन्. प्रसन्नाचार्यः

उपनिदेशकः, श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

प्रकाशनम्

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

कर्नाटकसंस्कृतविश्वविद्यालयेन मानितम्

श्रीव्यासराजमठः (सोसले), मैसूरु,

२०२०